स्वामिप्रसादे कृष्णाऽऽस्यः, किं त्वं राजाऽप्युवाच तम् ।
न प्रसादः किन्तु कोपो, यतो यस्मै स कुप्यति ॥२४॥
नागाङ्कं प्रेषयत्यस्मै, क्षुरीं दुर्लङ्घशासनः ।
मर्त्तव्यं तन्मयाऽवश्यं, क्रुद्धः स्वामी कुतोऽप्यसौ ॥२५॥
रुष्टस्तवैवाचार्योक्ते, प्राह राजाऽन्यशाखिनाम् ।
रुष्टः पञ्चनवत्या यत्, षण्णवत्यङ्किता क्षुरी ॥२६॥
तानप्याहूय सूर्युक्ते, तानाह्वास्त नृपान् नृपः ।
तेऽथाऽऽचार्याऽऽज्ञया चेलुः, सुराष्ट्राराष्ट्रमाययुः ॥२७॥
तत्रातिक्रान्तवर्षास्ते, प्रोक्ताः कालकसूरिभिः ।
किमपास्तोद्यमा यूयं, तेऽप्यूचुः कृत्यमादिश ॥२८॥
सूरिः प्रोवाच गृह्णीध्वं, मालवोज्जयिनीं यतः ।
निर्वाहस्तत्र वो भावी, तेऽवोचन्नास्ति शम्बलम् ॥२९॥
चूर्णेन हेममांवाहं, कृत्वा सूरिभिरर्पितम् ।
यथेच्छं स्वर्णमादाय, चेलुस्ते मालवान् प्रति ॥३०॥
लाटादिदेशानादाय, जग्मुर्मालवसीमनि ।
तच्च ज्ञात्वा गर्दभिल्लोऽभ्यमित्रीणोऽभवद् बलैः ॥३१॥
घोरे प्रवृत्ते सङ्ग्रामे, द्वयोरप्यथ सैन्ययोः ।
अभाजि शाखिसैन्योघैर्गर्दभिल्लचमूः क्षणात् ॥३२॥
गत्वोपरोधसज्जोऽस्थान्मालवेन्द्रः पुरीं निजाम् ।
वेष्टयित्वा शाखिनोऽपि, तस्थुर्गुर्वाज्ञयाऽथ ताम् ॥३३॥
युद्धेऽनिशं जायमाने, शून्ये प्राकार एकदा ।
नृपैः पृष्टा शून्यहेतुमादिशन्निति सूरयः ॥३४॥
अद्याष्टम्यां तिथावेष, विद्यां जपति गर्दभीम् ।
तां पश्यद्भिस्तदादेशात्, तैर्दृष्ट्वाऽऽख्यायि सूरये ॥३५॥
सूरिः प्राहाऽऽस्य जापान्ते, गर्दभी शब्दं करिष्यति ।
तच्छ्रुत्वाऽरिद्विपादादि, वान्तरक्तं पतेद् भुवि ॥३६॥
द्विक्रोशीमयाध्वं तत्, सर्वामादाय वाहिनीम् ।
योधानां च शतं साष्टं, दत्थ मे शब्दवेधिनाम् ॥३७॥
तथैव सर्वं तैश्चक्रे, योधानूचुश्च सूरयः ।
यदैषा स्फारयत्यास्यं, शब्दं कर्त्तुं भवद्भिस्तदा ॥३८॥
अकृताऽऽरावमेवाशु, पूरणीयं शरात् करैः ।
ततो व्यात्तं तया वक्त्रं, शरैः पूर्णं तदैव तैः ॥३९॥ युग्मम् ॥

५ ॰मापाकं कृ॰ D। ६ ॰दिनीवृतो लात्वा ज॰ P। ७ योधमूचु॰ P। ८ ततस्तैर्व्याप्तस्तत्कालं तस्याः पूर्णं मुखं श॰ P।

सा नृपमूर्ध्नि दत्त्वांऽह्रिं, कृत्वा विण्मूत्रमुद्यथौ।
भङ्क्त्वा गुर्वाज्ञया वप्रं, शाखिनोऽप्यविशन् पुरीम् ॥४०॥
पुरो बद्धं गर्दभिल्लं, तैस्ततः सूरयोऽब्रुवन्।
अतितीव्रतविध्वंसः, पाप! रे! यत् त्वया कृतः ॥४१॥
यच्चापमानितः संघो, वयं यच्च तिरस्कृताः।
तत्पा[प]द्रोः पुष्पमेतद्, भावी तु नरकः फलम् ॥४२॥
प्रायश्चित्तं गृहाण त्वमद्याप्यादाय तद् व्रतम्।
इत्युक्तोऽपि विमनस्को, देशान्निष्कासितः स तैः ॥४३॥
प्रागाश्रितोऽथ यः शाखी, सम्राट् चक्रे स सूरिभिः।
शककूलाद् यदायातास्तेऽभूदिति शकान्वयः ॥४४॥
इति प्रतिज्ञां निर्वाह्य, यामिं चारोप्य संयमे।
आलोचितप्रतिक्रान्तः, स्वं गच्छं सूरिराश्रयत् ॥४५॥

( २ )

इतश्च भृगुकच्छे स्तः, कालकार्यस्वस्रुः सुतौ।
बलमित्र-भानुमित्रौ, राड्-युवराट्श्रिया श्रितौ ॥४६॥
तावाह्वानाय सूरीणां, प्रैषतुर्मन्त्रिणं निजम्।
सूरिर्भृगुपुरं निन्ये, तेनाथापृच्छ्य शाखिनम् ॥४७॥
बलमित्रेण विच्छर्दैर्वेशितास्तत्र सूरयः।
संबुद्धं नृपयामेयं, बलभानुमदीक्षयत् ॥४८॥
राज्ञा भक्त्याऽत्रैव वर्षास्थापितैस्तैः पुरोहितः।
जिग्ये नृपपुरः साधून्, निन्दनैकोपपत्तिभिः ॥४९॥
द्वेषाद् भूपं रहोऽप्येति, स विप्रो व्यप्रतारयत्।
पथाऽप्येते येन पूज्या यान्ति सोऽपि तथैव च ॥५०॥
तत्पदाविक्रमादेषां, महत्याशातना भवेत्।
राजाऽप्यूचे सत्यमेतद्, विसृज्यन्ते कथं पुनः ॥५१॥
द्विजोऽवदद् देव! पुर्यामाधाकर्माद्यनेषणाम्।
प्रवर्त्तय ततो नैते, स्थास्यन्ति स्वयमेव हि ॥५२॥
नृपानुमत्या तेनोक्ताः, पौराश्चक्रुस्तथैव ताम्।
सूरयोऽप्यथ तद् ज्ञात्वा, प्रतिष्ठानपुरं ययौ ॥५३॥

( ३ )

प्रतिष्ठानपुरे शालिवाहनः श्रावको नृपः।
ज्ञापितस्तैः पर्युषणा, यत् कार्याऽस्माभिरागतैः ॥५४॥

---

१ °नाऽभवत् A।

ज्ञात्वाऽऽगतानथो सूरीन्, ससंघः पार्थिवोऽभ्यागत् ।
वेशिता विस्तराद् राज्ञा, ते चैत्यानि ववन्दिरे ॥५५॥
शातवाहनराजाऽऽद्यैः, सेव्यमानेषु तेष्वथ ।
क्रमात् पर्युषणा प्राप्ता, राज्ञोक्ताः सूरयस्ततः ॥५६॥
नभस्यशुद्धपञ्चम्या, शक्रयात्रा भवत्यतः ।
शक्रोऽनुगम्यो लोकानुवृत्त्या भावी मयाऽपि तत् ॥५७॥
विस्तराच्चैत्यपूजादि, कर्तुं नात्र प्रपार्यते ।
पर्युषणास्तु तत् षष्ठ्यामित्युक्ते सूरयोऽब्रुवन् ॥५८॥
सूर्योऽप्युदेत्यपरस्यां, मेरुचूला चलत्यपि ।
न तु पर्युषणा राजन्! लङ्घते पञ्चमीनिशाम् ॥५९॥
चतुर्थ्यामस्तु राज्ञोचे, श्रीसंघानुज्ञया ततः ।
पर्युषणां चतुर्थ्यां ते, चक्रुः कालकसूरयः ॥६०॥
पूर्णिमास्याश्चतुर्दश्यां, चतुर्मासान्यथाययुः ।
पाक्षिकाणि चतुर्दश्यां, पुराऽप्यासन् यदूचिरे ॥६१॥
तं पक्खियचुन्नीए, महानिसीहे दसासुयक्खन्धे ।
भणियं चउद्दसीए, समराइच्चे फुडं चेव ॥६२॥
राजानुग्रहोऽयं ये, नन्दीश्वरतपःकृताम् ।
राज्ञीनां पारणे भावि, यत् साधूत्तरपारणम् ॥६३॥
तत्राह्नि चानुवर्षं यत्, पूज्यन्ते साधवो जनैः ।
तत्र देशे प्रवृत्तस्तत्, साधुपूजालयोत्सवः ॥६४॥

( ४ )

अथ कर्म्मवशाज्जातान्, शिष्यानुल्लण्ठचेष्टितान् ।
ज्ञात्वा तेषु च सुप्तेषु, शय्ये(य्ये)शं सूरयोऽब्रुवन् ॥६५॥
पौत्रसागरचन्द्राऽऽख्यसूरिपार्श्वे व्रजाम्यहम् ।
निर्बन्धाः शिष्यपृच्छायां, त्वं तान् निर्भर्त्स्य साधयेः ॥६६॥
इत्युक्त्वा ते ययुस्तत्र, वृद्धः कोऽपीत्यवज्ञया ।
अनभ्युत्थाय व्याख्यान्ते, प्रशिष्येणेति जल्पिताः ॥६७॥
कीदृग् ममाऽऽर्य! व्याख्यानं, भव्यं चेत्याह सूरिराट् ।
किञ्चित् पृच्छेति तेनोक्ते, प्रपच्छाऽनित्यतां विभुः ॥६८॥
सागरः प्राह नो धर्म्मं, विना किञ्चिदिह स्थिरम् ।
धीमतां तत् स एवाऽर्हं इत्युक्ते गुरवोऽब्रुवन् ॥६९॥
नास्ति धर्मोऽध्यक्ष[ः?] मानातीतत्वाच्छशशृङ्गवत् ।
तदभावे नानुमानात्, तदलम्भत चिकीर्षया ॥७०॥

सागरः प्राह प्रत्यक्षौ, धर्माधर्मौ स्त एव यत्।
सन्त्येकेऽत्रैव सम्राजस्तद्भृत्याश्चापरे नराः ॥७१॥
इतश्च पश्चाद् दुःशिष्यैः, पृष्टः शय्यातरोऽवदत्।
गुर्वाज्ञां भो! स्वयं लुप्त्वा, दुष्टाः! पृच्छत मां तु किम्? ॥७२॥
त्यक्तास्तद्गुरुभिर्यूयं, यात दृष्टिपथान्मम।
तेऽपि भीता क्षमयित्वा, शय्येशं जगदुः पुनः ॥७३॥
दयां कृत्वैकवारं नः, शाधि याताः क सूरयः।
श्राद्धोऽपि तत्र तान् प्रैषीद्, ज्ञात्वा सम्यगुपस्थितान् ॥७४॥
आगच्छतश्च तान् श्रुत्वा, किमुपैति पितामहः।
इति पृष्टः प्रशिष्योक्तः, सूरिः स्माहापि मे श्रुतम् ॥७५॥
दृष्ट्वा तानायतः साधूनभ्युत्तस्थौ च सागरः।
तैरूचे साधुसंघोऽयं, गुरवस्तु पुरागताः ॥७६॥
कालिकार्ये बहिर्भूम्यागतमभ्युत्थितान् मुनीन्।
ऊचे प्रशिष्यः किमिदं, तेऽप्यूचुर्गुरवो ह्यमी ॥७७॥
क्षमयित्वाऽनुतप्यन्तं, सागरं स्माह सूरिराट्।
माऽन्वताप्सीर्न ते भावदोषः किन्तु प्रमत्तता ॥७८॥
वालुकाप्रस्थदृष्टान्तादुचार्यास्य श्रुतस्मयम्।
विनीतशिष्यसंवीता विजह्रुः सूरयोऽन्यतः ॥७९॥

( ५ )

अथान्यदा विदेहेषु, श्रीसीमन्धरसन्निधौ।
निगोदजीवव्याख्यानं, श्रुत्वा शक्रोऽभ्यधादिति ॥८०॥
एवं स्वामिन्! निगोदानां, व्याख्यां किं कोऽपि भारते।
वेत्तीदानीं जिनोऽथाऽऽख्यत्, कालकार्या विदन्ति ताम् ॥८१॥
आगत्य कौतुकाच्छक्रः, कृत्वा वृद्धद्विजाकृतिम्।
नत्वाऽप्राक्षीन्निगोदाऽऽख्यां, प्रभुश्चाऽऽह यथातथम् ॥८२॥
संख्यातीताः सन्ति गोला गोलेऽसंख्या निगोदकाः।
एकैकस्मिन् निगोदेऽथ, सिद्धेभ्योऽनन्तजन्तवः ॥८३॥
इत्यादि सूरिणाऽऽख्याते, पुनः पप्रच्छ वासवः।
प्रार्थयेऽहं तदाख्याहि, कियदायुर्मम प्रभो! ॥८४॥
सूरिज्ञानोपयुक्तोऽभूद्, यावद् द्वे सागरोपमे।
इन्द्रस्त्वमिति सूर्युक्ते, शक्रः स्वं रूपमाश्रयत् ॥८५॥

१० °प्यागमम् P।

नत्वा स्तुत्वा च सूरीन्द्रमिन्द्रः स्वं स्थानमभ्यगात् ।
सूरिः स्वायुःपरिमाणं, ज्ञात्वा संलेखनां व्यधात् ॥८६॥
इति श्रीकालकाचार्याः, कृत्वा प्रवचनोन्नतिम् ।
यथाऽऽयुः पालयित्वा तेऽनशनेन दिवं ययुः ॥८७॥
श्रीरत्नसिंहसूरीणामन्तेवासी कथामिमाम् ।
चक्रे विनयचन्द्राऽऽख्य[ः], संक्षिप्तरुचिहेतवे ॥८८॥
यो गर्दभिल्लं जगदेकमल्लं, समूलमुन्मूलयति स्म राज्यात् ।
आनीतवान् पर्युख(ष)णाऽऽख्यपर्व, दिने चतुर्थ्यां स गुरु[ः] श्रिये वः ॥८९॥+

इति श्रीकालिकसूरिकथानकम् ॥

D आदर्शे प्रान्तोल्लेखः—सं. १६१२ वर्षे ॥ श्रीरस्तु ॥

P आदर्शे प्रान्तोल्लेखः—

सं० १३४४[?] वर्षे वैशाखशुदौ अक्षततृतीयायां सोमे पर्युषणाकल्पपुस्तिका लिखिता ।

तस्मिन्नेवादर्शेऽन्याक्षरैर्लिखितमिदम्—

श्रीवर्द्धमानो जु.... सितमूलः पार्श्वादिसद्वृत्तपृथुप्र.... ।
....शाखोऽङ्कृतगच्छगुच्छः श्रेयःफलं यच्छतु कल्पवृक्षः ॥

शिवमस्तु श्रीः ॥

# [१६]

## पल्लिवालगच्छीयश्रीमहेश्वरसूरिविरचिता

# कालिकाचार्यकथा।

[ लेखनसं० १३६५ ]

ॐ नमः सर्वज्ञाय ॥

पञ्चम्यां विदितं पर्व, चतुर्थ्यां येन निर्मितम् ।
श्रीमतः कालिकाचार्यगुरोस्तस्य कथोच्यते ॥१॥

---

+ P आदर्शे नास्त्येतदन्तिमं पद्यद्वयम् ।

१ °ञ्चमीवि° P, °ञ्चमीसंस्थितं H । २ श्रीमत्संघप्रसादेन, तत्कथा बुध्यते मया P, सांवत्सरीयं तस्योच्चैः कथा संप्रति कथ्यते C ।

धरावासपुरेशस्य, वैरिसिंहस्य³ नन्दनः ।
अभूतां सुरसुन्दर्यां, कालकश्च सरस्वती ॥२॥
कालकोऽन्येद्युरुद्याने, गतो मित्रैः पुरस्कृतः ।
गुणाकरगुरोर्बुद्धः⁴, मात्राजीदनुजायुतः ॥३॥
शतसंख्या नरा नार्यस्तावन्तु मात्रजन्नथ ।
कालकः स्वपदे न्यासीद्⁵, गुरुभिर्गुरुभिर्गुणैः ॥४॥
प्रवर्त्तिनी⁶ च तज्जामिरवन्त्यामन्यदाऽगमत् ।
श्रीमन्तः कालकाचार्याः, साधु-साध्वीसमन्विताः ॥५॥
गर्दभिल्लोऽन्यदा वीक्ष्य(क्ष्या)वन्त्यां चैत्ये सरस्वतीम् ।
बलादन्तःपुरे न्यस्यात्, को विवेको हि⁹ कामिनाम् ॥६॥
तस्मिन् बोधवचः सूरेः, संघस्य च वृथाऽभवत् ।
अमात्यानां गिरा मिथ्या, क्षीणायुषमहौषधी ॥७॥
अथोन्मत्तकवेषेण, भ्रमन्निति ललाप सः ।
गर्दभिल्लो यदि नृपस्ततः स्यात् किमतः परम् ? ॥८॥
भिक्षेऽहं यदि शून्ये वा, वसामि किमतः परम् ? ।
मत्वेति बोधितोऽमात्यैर्नाबुध्यत नृपाधमः ॥९॥
श्रुत्वेति कुपितः सूरिः, सस्मारागमभाषितम् ।
संघादिकार्ये यच्चक्रिसैन्यमप्यन्तयेन्मुनिः ॥१०॥
ध्यात्वेति शककूलेऽगात्, सामन्तास्तत्र शाखयः ।
नृपः शाखानुशाखिस्तु, कीर्त्यते देशभाषया ॥११॥
शाखमेकं च मन्त्राद्यैस्तस्थुरावर्ज्य सूरयः ।
क्षुरिकामाभृतस्तत्रान्यदा दूतः समागमत् ॥१२॥
शाखिः श्यामाननः पृष्टः, सूरिभिः प्राह नः प्रभुः ।
क्रुद्धः प्रेषयते शस्त्रीं, तया छेद्यं निजं शिरः ॥१३॥
कृपाणिकायामेतस्यां, षण्णवत्यङ्कवीक्षणात् ।
मन्ये षण्णवतेः सामन्तानां क्रुद्धो धराधिपः ॥१४॥
सर्वेऽपि गुप्तमाहाय्य, सूरिभिस्तेऽथ मेलिताः ।
तेरीभिः सिन्धुमुत्तीर्य, सौराष्ट्रायां समाययुः ॥१५॥
वर्षाकाले तदायाते, गतिमत्यूहकारिणि ।
विधाय षण्णवत्यंशैः, सुराष्ट्रां तेऽवतस्थिरे ॥१६॥

३ °स्य सूसृतः C । ४ °ने वाहकेलिगतो गुणी (°तो गुरुः H) P । ५ °कराभिधाद् बुद्धः PH ६ °दे न्यस्तः P । ७ °नी त्वेत° PH । ८ °दाऽवन्तीपतिवीक्ष(क्ष्य)स° PH । ९ हि मानिनाम् PH । १० °शास्त्रोत्सुक्ती° P । ११ °दा सूरि(रेः) स॰ C । १२ °ह त[त्] प्र° C । १३ °स्यां श्यायामह° C १४ सामन्तानां षण्णवते[ः], क्रुद्धोऽन्येषां नराधिपः C । १५ ते सर्वे सि° H । १६ वर्षारात्रे त° H ।

गुर्वादिष्टैश्च शरदि, तैरूचे नास्ति सम्बलम् ।
गुरुश्चूर्णेन सौवर्णमिष्टिकापाकमादधे ॥१७॥
संबलाद् बलवन्त[17]स्ते, मालवं लातुमिच्छवः ।
ते जग्मुः मालवे देशे, सूरिभिः प्रेरिताश्चिरात् ॥१८॥
गर्दभिल्लः ससैन्योऽपि[18], समेतस्तैर्महाबलैः ।
शकैर्भग्नप्रविष्टान्तःपुर्यां रुद्धा च तैः पुरी ॥१९॥
[19]अथाष्टमीदिने दुर्गे, शून्ये पृष्टः शकैर्गुरुः ।
आचख्यौ गर्दभीं विद्यां, प्रचण्डां साधयिष्यति ॥२०॥
तद्वचःश्रवणा[20]त् सर्वं, सैन्यं स्यान्मूर्च्छितं क्षणात् ।
गव्यूते[21]ः परतः सर्वं[22], शिविरं तन्निवेश्यताम् ॥२१॥
अष्टोत्तरशतं शब्दवेधिनः सन्तु मेऽन्तिके ।
तथाकृतेऽथ तैः सूरिनोदितैः[23] शब्दवेधिभिः ॥२२॥
तस्याः प्रसारितं वक्त्रं, तूणीचक्रे क्षणादपि ।
हतप्रभावा नष्टाऽथ, विद्याऽवद्यात्मनस्ततः ॥२३॥
[24]गुर्वाज्ञया ततः पुर्यां, प्रविश्यानायितः शकैः ।
बद्ध्वा गर्दभवद् गर्दभिल्लो गुरुपदा[25]न्तिके ॥२४॥
स तैरूचे तवान्यायतरोः पुष्पमिदं तनु ।
फलं त्वन्यभवे भा[26]वि, घोरा नरकवेदना ॥२५॥
तद् धर्म्मं प्रतिपद्यस्वाधुनाऽपि जिनभाषितम् ।
इत्युक्तेऽवाङ्मुखो द्वेधा, चक्रे निर्विषयः स तैः ॥२६॥
मित्रं शाखिं नरेन्द्रत्वे, सामन्तत्वेऽपरानपि ।
सूरयः स्थापयामासुर्निजं जामिं च संयमे ॥२७॥

( २ )

अथो भृगुपुरे राजा, युवराजश्च तिष्ठतः ।
बलमित्र-भानुमित्राभिधौ जामिसुतौ गुरोः ॥२८॥
प्रधानं प्रेष्य तौ सूरिमानी[27]य शल्य(ल्य)मानसौ ।
प्रवेश्य चक्रतुश्चैत्योत्स[28]वं जितशतक्रतू ॥२९॥
श्रुतो नृ[29]पस्वसुर्भानुश्रियो धर्म्मं गुरोर्मुखात् ।
बलभानुः समाकर्ण्य, दक्षो दीक्षामुपाददे ॥३०॥

१७ °वन्तोऽपि मा° PH । १८ °पि संग्रामेण म° C । १९ अथान्यदा दिनेऽष्टम्या दुर्गे शून्ये शकैर्गुरुः । पृष्टोऽसौ ग° C । २० °त् शत्रुसै° PH । २१ °व्यूतात् प° C । २२ °र्वं तच्छिबिरं नि° P । २३ रिर्वेष्टितः ( रेरीदितैः H ) शब्दवेधिनः(भिः) C । २४ सूर्याज्ञ° PH । २५ गुर्वा(र्वं)न्तिके C । २६ °वि नानान° C । २७ °ल्य प्राज्यमानतः PH । २८ °वं कालकसूरिभिः(णः) C । २९ °पस्य भा° C ।

भक्तं वीक्ष(क्ष्य) नृपं क्रुद्धः, पुरोधाऽवि(वी)वदॆद् रयात् ।
निरुत्तरीकृतो भूँपं, कैतवादित्यभाषत ॥३१॥
वन्द्यपादपदाक्रान्तिर्महादोषप्रपोषिणी ।
नृपोऽथ तद्गिरा मूढोऽनेषणं नगरे व्यधात् ॥३२॥
एवं निरीक्ष्यँ वर्षायामपि सूरिः श्रुगो[ः] पुरात् ।
महाराष्ट्रकिरीटाभं, प्रतिष्ठानँपुरं गतः ॥३३॥

( ३ )

सालवाहनभूपेन, महद्धर्या स प्रवेशितः ।
विज्ञप्तश्च ससंघेन पष्ठ्यां पर्युषणा(णां) कुरु ॥३४॥
यतो लोकानुवृत्त्याऽत्रेन्द्रोत्सवं पञ्चमीदिने ।
सूरयः [३४]प्रोचिरे पर्युषणा नात्येति पञ्चमी[म्] ॥३५॥
जिना गँणेशास्तच्छिष्याः, पञ्चाँशत्के दिने यथा ।
पुरा पर्युषितास्तद्वद्, गुरवो मे तथा वयम् ॥३६॥
चतुर्थ्यामस्त्विति प्रोक्ते, नृपेण गुरवो जगुः ।
अस्तु प्रोक्तं हि सिद्धान्ते, परिवास्त्वन्यमारतः ॥३७॥

( ४ )

स्वच्छन्दानन्यदा शिष्यान्, प्रोज्झ्य शय्यातराग्रतः ।
आख्याय सागरचन्द्रं, प्रशिष्यं सूरयो ययुः ॥३८॥
तेन नाभ्युत्थिता व्याख्याक्षणे तेऽज्ञातवृत्तयः ।
तस्थुस्तत्पृष्ठतः व्याख्याचारुताप्रथनोद्यताः ॥३९॥
अथ शय्यातराज्ज्ञात्वा, मुनयोऽपि समाययुः ।
सूँरिं ते(तं) क्षमयन्तस्ते, प्रतिष्ठावसतौ ततः ॥४०॥
ज्ञात्वा सागरचन्द्रोऽपि, ह्रीभरानतकन्धरः ।
नेत्रैँम्भसा गुरोः पादौ, प्रीत्या प्रक्षालयन्निव ॥४१॥
तत्याप्य वालुकाप्रस्थार्द्धस्य दृष्टान्तदर्शनात् ।
तँत् संबोध्य यते ! ज्ञाने, त्वं गर्वं मा कृथा वृथा ॥४२॥
यथा रिक्तो भवेत् प्रस्थः, स्थाँनान्तरविरेचनात् ।
स्थाने स्थाने विगमनाद्, यथा स्यान्मृदलिपका ॥४३॥
तथा गणेशाः पूर्वेभ्यो, वत्स ! हीनोऽस्म्यहं क्रमात् ।
मँत्तोऽपि हीनो म[द्]शिष्य[ः], तस्मै(स्मा)द्धीनो भवानपि ॥४४॥

---

३० °द मुधा PH । ३१ भूपं कै° H । ३२ °क्ष्य चान्येद्युरागतेऽपि घनागमे P, °क्ष्य च घनागमेऽपि घनागमः H । ३३ °पुरेऽगमत् C । ३४ प्रोचुः रे प° P । ३५ °गणेशास्तच्छिष्या प° P । ३६ पञ्चाशत्तमे दिने C । ३७ गुरुन् क्षमयितो(ताः) बाढं न पुनः कारोन च P । ३८ तस्यौ चाम्भसो. पादौ प्रपतः क्षा(प्रमोः प्रक्षाH)लयन्निव PH । ३९ तं संबन्धमवदत्क्षा° PH । ४० स्थानस्थानविरेचनात् H । ४१ मत्तो गुरवस्तस्मात् त्वं च हीनतरस्तथा P, मत्तस्ते गुरुस्तस्मात् त्वं हीनतरस्तथा H ।

प्रज्ञापरीषहः सोऽयं, वत्स ! सह्यस्ततस्त्वया ।
इत्युक्तः स गुरोर्वाचं, तथेति प्रति(त्य)पद्यत ॥४५॥

( ९ )

शक्रोऽन्यदा निगोदानां, व्याख्यां सीमन्धरप्रभोः ।
श्रुत्वा पप्रच्छ भ(भा)रते, व्याख्यात्येवंविधं हि कः ? ॥४६॥
विज्ञाय कालिकाचार्यं, विप्रवेषः समागमत् ।
तद्व्याख्यान[42]श्रुतेर्हृष्टो, निगोदानां विचारणात् ॥४७॥
गोला[43]उ असंखिज्जा, असंखनिगोयगोलओ भणिओ ।
इक्किक्कं पि निगोए, अणंतजीवा मुणेयव्वा ॥४८॥
विप्रेणा[44]युषि पृष्टो(ष्टे), शक्रोऽसीति गुरुर्जगौ ।
हृष्टः सोऽथ निजं रूपं, प्रकाश्यैवं तमस्तवीत् ॥४९॥
जय प्रवचनाधार !, जय संसारतारक ! ।
जय सीमन्धरस्वामिस्तुतैः[45], श्रीमन् ! नमोऽस्तु ते ॥५०॥
स्तुत्वेतीन्द्रोऽन्यतो द्वारं, विधाय तदुपाश्रये ।
गतो दिवं सूरिरपि, प्रपाल्यायुर्ययौ दिवम् ॥५१॥
सांव[46]त्सरीयं सत्पर्व, चतुर्थ्यां येन निर्मितम् ।
युगप्रधानः सूरीन्द्रो, जीया[न्] नित्यं स कालकः ॥५२॥

इति श्रीपल्लिवालगच्छे महेश्वरसूरिभि-
र्विरचिता कालिकाचार्यकथा समाप्ता ॥

Cसंज्ञकप्रतिप्रान्ते प्रशस्तिरियम्—

श्रीमालवंशोऽस्ति विशालकीर्त्तिः,
श्रीशान्तिसूरिः(रि)प्रतिबोधितडीडकाख्य[ः] ।
श्रीविक्रमाद् वेद-नभर्पिवत्सरे
श्रीआदिचैत्यकारापितनवहरे च (?) ॥१॥
तस्य शाखासमुद्भूतदेवसिंहो गुणाधिकः ।
तत्सुतः कर्मसिंहस्याभूत(त्) पुत्रो मलसिंहक[ः] ॥२॥

---

४२ °नस्तु(श्रु)ते हृष्टः पप्रच्छायुर्निजं वृषा PH । ४३ नास्तीयं गाथा PH पुस्तकयोः । ४४ सूरिः श्रुतेन विज्ञाय, शक्रोऽसीति जगाद तम् हृ° PH । ४५ °त ! स्वामिन् ! P । ४६ कल्पोत्सवस्तु पञ्चम्यां(म्याः), चतुर्थ्यां येन कारितम् । संघेनानुमि(म)तः श्रीमान् जीयात् सूरिः स कालकः ॥५२॥ यः श्रीपर्युषणां महागुणगणां चक्रे चतुर्थिदिने, पञ्चम्या इह सालिवाहन-महीपालस्य विज्ञप्तितः । नानालब्धियुजे जिनप्रवचनप्रोत्सर्पिणा कारिणा, तस्मै कालकसूरये युगवराग्र्ये नमो भक्तितः ॥५३॥

इति श्रीकालिकाचार्यकथानकम् समाप्तम् P ।,

षट्स्थानपतितान्मत्वा, श्रुतकेवलिनोऽपि हि । न गर्वः सर्वथाकार्यः सूरिसागरचन्द्रवत् ॥५२॥ चतुर्थीपर्युषणापर्वप्रस्थापकस्य श्रीकालिकाचार्यस्य संस्कृतबन्धमयी कथानिका लिखिता H ॥

महीरोल्लनगोत्रे च, मण्डनो धान्धकामिध[:] ।
तत्सुता[:]-त्रय[:] संजाता ऊदल-देदाकनामतः ॥३॥
गोत्रमण्डनहालाकभग्नी यस्य चतुष्टयी ।
सी(शी)लालङ्कारधारी च, आभू मनी च मइणला (?) ॥४॥
षड्दर्शन[सु]भक्ता च, श्रीरिवा(व) हरिमण्डनी ।
अर्द्धाङ्गलक्ष्मी[:] साहू, मलसिंहस्य पुण्यभुग् ॥५॥
पञ्च पुत्रा[:] पवित्राश्च, पञ्चपुत्री(न्यः) सतीव्रताः ।
कल्पवृक्षसमानेऽपि, संघशासनसेवकान्(काः) ॥६॥
धारा-राम-लाखाको, जइतसिंह-भीमकौ ।
ऊदी पूनी च चांदू च, रुक्मिणी सोनणी तथा ॥७॥
धाराकपत्नी च सुव्रता, जयश्री [च] तदङ्गना[जाः] ।
वेदमिवा(दा इव) चतुष्ट्य(यी),सयम्मणो पांप(खांख)ण-मदनकौ च ॥
रत्नस्य रत्नाकरतुल्यरूप[:]
धनसिंहवीर[:] स्वजनप्रियश्च ? ॥८॥
रामापुत्रस्तु खेताक[:], पद्मो लाखाकनन्दनः ।
जइतसिंहसुतो हाल्ह[:], भीमापुत्री स(सु)लक्षणी ॥९॥
स्वश्रेयसे कारितकल्पपुस्तिका,
स(सा)हूकपुण्योदयरत्नभूमिः ।
श्रीपल्लिगच्छे स्वगुणो(णौ)कधाम्ना,
[सु]वाचिता श्री(साऽपि) महेश्वरसूरिभिः(रेण) ॥१०॥

नृपविक्रमकालातीत सं० १३६५ वर्षे भाद्रपदरवौ नवम्यां तिथौ श्रीमेदपाटमण्डले वऊणग्रामे पुस्तिका लिखिता ॥

उदकानलचौरेभ्यः, मूल(ष)केभ्यस्तथैव च ।
रक्षणीयात् प्रयत्नेन, यत्कष्टे न मिथेते (?) ॥१॥

मङ्गलं महाश्रीः । शुभं भवतु ॥

स्वस्यामेव प्रतिप्रान्ते पुष्पिकेयम्—

संवत् १३७८ वर्षे भाद्रपदशुदि ४ श्रावक मोल्हासुतेन भार्याउदयसिरिसमन्वितेन पुत्रसोमा–लापा–चेता सहितेन श्रावकऊदाकेन श्रीकल्पपुस्तिका गृहीत्वा श्रीअभयदेवसूरीणां समर्पिता वाचिता च ॥

Hसंज्ञकप्रतिप्रान्ते लिखितमिदमधिकम्—

जं रयणि कालगओ, अरिहा तित्थंकरो महावीरो ।
तं रयणि अवंतिवई, अहिसित्तो पालओ राया ॥१॥

पालयरज्जं सट्ठी(६०), पणपन्नसयं(१५५) नवण्हनंदाणं ।
मोरीणं अट्ठसयं(१०८), तीसं(३०) वरिसाण पूसमित्तस्स ॥२॥
बलमित्त-भाणुमित्ता, सट्ठी(६०) नरवाहणस्स चालिसा(४०) ।
ततो गर्दभिल्लः ॥

पालकराज्यम् ६४(६०)। नवनन्दराज्यम् १५५। मौर्यराज्यम् १०८। पुष्यमित्रराज्यम् ३० । श्री-कालिकसूरिभ्रातृ(भागिनेय)बलमित्र–भानुमित्रौ राज–युवराजौ । तद्भगिनी भानुश्रीस्तत्सूनुर्बलभानुमित्र[राज्यम्]६० ।

श्रीवीरात् ४५३ गर्दभिल्लोच्छेदकः कालिकाचार्यः । उक्तं च प्रथमानुयोगसारोद्धारे युगप्रधानदण्डिकायां प्रथमोदये—

तह गद्दभिल्लरज्जस्स, छेअगो कालका[य]रिओ होही ॥
निव्वाणनिसाए गोयमपालियनिवो अवंतीए ।
होही पाडलियपहू, सो मुरियउ उदाय(यि)निवमरणे ॥

वीरात् ९९३ चतुर्थ्यां पर्युषणाकारकोऽन्यः कालिकाचार्यः ॥ प्रथमानुयोगसारोद्धारे युगप्रधानदण्डिकायां द्वितीयोदये—

नवसए तेणउए(९९३) खलु, समइक्कंतेहिं वीरवद्धमाणाओ ।
पज्जोसवणाचउत्थी, कालिकसूरीहिंतो ठविया ॥
पूरिया लख-तिगदीणा रयणासयं समस्स तियं ।
जो सालवाहणमिवं, सट्ठी कासीइ य पइट्ठाणे ॥

श्रीवीरात् ३३५ निगोदव्याख्याता प्रथमकालिकाचार्यः ।

अस्या एव प्रतिप्रान्ते पुष्पिकेयम्—

संवत् १६६६ वर्षे मार्गशीर्षमासे शुक्लपक्षे एकादश्यां तिथौ अमृतवासरे श्रीस्तम्भतीर्थे पिप्फलगच्छे पण्डितश्री-कान्हजील(लि)पीकृतं स्ववाचनाय वा परोपकाराय ॥ थरादामहात्मा चंद्रतणी परि निर्मला निःकलङ्का स्वआजीविकावृत्या ॥

# [१७]

## श्रीप्रभाचन्द्राचार्यविरचितं

प्रभावकचरितान्तर्गतं

# कालकचरितम् ॥

[ रचनासंवत् १३३४ ]



श्रीसीमन्धरतीर्थेशविदितोऽनणुतो गुणात् ।
कुतश्चिदपि सोऽव्याद् वः, कालकसूरिकुञ्जरः ॥१॥
प्राच्यैर्बहुश्रुतैर्वृत्तं, यस्य पर्युषणाश्रयम् ।
आदृतं कीर्त्यते किं न, शकटी शकटानुगा ॥२॥
श्रीधरावासमित्यस्ति, नगरं न गरो जयी ।
द्विजिह्वास्यसमुद्दीर्णो, यत्र साधुवचोऽमृतैः ॥३॥
आशाकम्बावलम्बाढ्या, महावलमरोच्छ्रिता ।
कीर्त्तिपताकिका यस्याक्रान्तव्योमा गुणाश्रया ॥४॥ युग्मम् ॥
श्रीवैरिसिंह इत्यस्ति, राजा विक्रमराजितः ।
यत्प्रतापो रिपुस्त्रीणां, पत्रवल्लीरशोषयत् ॥५॥
तस्य श्रीशेषकान्तेव, कान्ताऽस्ति सुरसुन्दरी ।
उत्पत्तिभूमिर्भद्रस्य, महाभोगविराजिनः ॥६॥
जयन्त इव शक्रस्य, शशाङ्क इव वारिधेः ।
कालको कालकोदण्डखण्डितारिसुतोऽभवत् ॥७॥
सुता सरस्वती नाम्ना, ब्रह्मभूर्विश्वपावना ।
यदागमात् समुद्रोऽपि, गुरुः सर्वाश्रयोऽभवत् ॥८॥
कालकोऽश्वकलाकेलिकलनायान्यदा बहिः ।
पुरस्य श्रमायासीदनायासी हयश्रमे ॥९॥
तत्र धौरितकात् प्लुत्या, वल्गितेनापि वाहयन् ।
उत्तेजिताद्दुतसद्गत्या, हयानुत्तेरितादपि ॥१०॥
श्रान्तस्तिमितगन्धर्वो, गन्धर्व इव रूपतः ।
अशृणोन्मसृणोदारं, स्वरमारामगध्यतः ॥११॥
अथाह मन्त्रिणं राजपुत्रः कीदृक् स्वरो ह्यसौ ।
मेघगर्जितगम्भीरः, कस्य वा ज्ञायतां ततः ॥१२॥

व्यजिज्ञपत् स विज्ञाय, नाथ! सूरिर्गुणाकरः ।
प्रशान्तपावनीं मूर्तिं, बिभ्रद् धर्मं दिशत्यसौ ॥१३॥
विश्राम्यद्भिर्नृपारामे, श्रूयतेऽस्य वचोऽमृतम् ।
अस्त्वेवमिति सर्वानुज्ञातं तत्राभ्यगादसौ ॥१४॥
गुरुं नत्वोपविष्टे च, विशेषादुपचक्रमे ।
धर्माख्यां योग्यतां ज्ञात्वा, तस्य ज्ञानोपयोगतः ॥१५॥
धर्मार्हद्गुरुतत्त्वानि, सम्यग् विज्ञाय संश्रय ।
ज्ञान-दर्शन-चारित्ररत्नत्रयविचारकः ॥१६॥
धर्मो जीवदयामूलः, सर्वविद् देवता जिनः ।
ब्रह्मचारी गुरुः सङ्गभङ्गभू रागभङ्गभित् ॥१७॥
व्रतपञ्चकसंवीतो, यतीनां संयमाश्रितः ।
दशप्रकारसंस्कारो, धर्मः कर्मच्छिदाकरः ॥१८॥
य एकदिनमप्येकचित्त आराधयेदमुम् ।
मोक्षं वैमानिकत्वं वा, स प्राप्नोति न संशयः ॥१९॥
अथो गृहस्थधर्मश्च, व्रतद्वादशकान्वितः ।
दान-शील-तपो-भावभङ्गीभिरमितः शुभः ॥२०॥
स सम्यक् पाल्यमानश्च, शनैर्मोक्षप्रदो नृणाम् ।
जैनोपदेश एकोऽपि, संसाराम्भोनिधेस्तरी ॥२१॥
श्रुत्वेत्याह कुमारोऽपि, भद्गिनीभङ्गिनीं दिश ।
दीक्षां मोक्षं यथा ज्ञानवेलाकुलं लभे लघु ॥२२॥
पितरौ स्वावनुज्ञाप्यागच्छ तत् तेऽस्तु चिन्तितम्
अत्यादरेण तद् कृत्वाऽगाज्जाम्या सहितस्ततः ॥२३॥
प्रव्रज्याऽदायि तैस्तस्य, तया युक्तस्य च स्वयम् ।
अधीती सर्वशास्त्राणि, स प्रज्ञाऽतिशयादभूत् ॥२४॥
स्वपट्टे कालकं योग्यं, प्रतिष्ठाप्य गुरुस्ततः ।
श्रीमान् गुणाकारः सूरिः, प्रेत्यकार्याण्यसाधयत् ॥२५॥
अथ श्रीकालकाचार्यो, विहरन्नन्यदा ययौ ।
पुरीमुज्जयिनीं बाह्यारामेऽस्याः समवासरत् ॥२६॥
मोहान्धतमसे तत्र, मग्नानां भव्यजन्मिनाम् ।
सम्यगर्थप्रकाशोऽभूत्, प्रभूष्णुर्मणिदीपवत् ॥२७॥
तत्र श्रीगर्दभिल्लाख्यः, पुर्यां राजा महाबलः ।
कदाचित् पुरबाह्योर्व्यां, कुर्वाणो राजपाटिकाम् ॥२८॥
कर्मसंयोगतस्तत्र, व्रजन्तीमैक्षत स्वयम् ।
जामिं कालकसूरीणां, काको दधिघटीमिव ॥२९॥ युग्मम् ॥

हा! रक्ष रक्ष सोदर्य!, क्रन्दन्तीं करुणस्वरम्।
अपाजीहरदत्युग्रकर्मभिः पुरुषैः स ताम् ॥३०॥
साध्वीभ्यस्तत् परिज्ञाय, कालकप्रभुरप्यथ।
स्वयं राजसमज्यायां, गत्वाऽवादीत् तदग्रतः ॥३१॥
वृत्तिर्विधीयते कच्छे, रक्षायै फलसंपदः।
फलानि भक्षयेत् सैवाख्येयं कस्याग्रतस्तदा ॥३२॥
राजन्! समग्रवर्णानां, दर्शनानां च रक्षकः।
त्वमेव तन्न ते युक्तं, दर्शनिव्रतलोपनम् ॥३३॥
उन्मत्तकभ्रमोन्मत्तवदुन्मत्तो नृपाधमः।
न मानयति गामस्य, म्लेच्छवद् ध्वंसते तथा ॥३४॥
संघेन मन्त्रिभिः पौरैरपि विज्ञापितो दृढम्।
अवाजीगणदारूढो, मिथ्यामोहे गलन्मतिः ॥३५॥
प्राकृक्षात्रतेज आचार्य उन्निद्रमभजत् ततः।
प्रतिज्ञां विदधे घोरां, तदा कातरतापनीम् ॥३६॥
जैनापभ्राजिनां ब्रह्मबालप्रमुखघातिनाम्।
अर्हद्‌बिम्बविहन्तॄणां, लिप्येऽहं पाप्मना स्फुटम् ॥३७॥
न चेदुच्छेदये शीघ्रं, सपुत्र-पशु-बान्धवम्।
अन्यायकर्दमक्रोडं, विलुवन्तं नृपब्रुवम् ॥३८॥ युग्मम्॥
असंभाव्यमिदं तत्र, सामान्यजनदुष्करम्।
उक्त्वा निष्क्रम्य दम्भेनोन्मत्तवेषं चकार सः ॥३९॥
एकाकी भ्रमति स्मायं, चतुष्के चत्वरे त्रिके।
असम्बद्धं वदन् द्विस्त्रिश्चेतनाशून्यवत् तदा ॥४०॥
गर्दभिल्लो नरेन्द्रश्चेत्, ततस्तु किमतः परम्?।
यदि देशः समृद्धोऽस्ति, ततस्तु किमतः परम्? ॥४१॥
वदन्तमिति तं श्रुत्वा, जनाः प्राहुः कृपाभरात्।
स्वसृविरहितः सूरिस्तादृग् ग्रहिलतां गतः ॥४२॥ युग्मम्॥
दिनैः कतिपयैस्तस्मान्निर्ययावेक एव सः।
पश्चिमां दिशमाश्रित्य, सिन्धुतीरमगाच्छनैः ॥४३॥
शाखिदेशश्च तत्रास्ति, राजानस्तत्र शाखयः।
शाकापराभिधाः सन्ति, नवतिः षड्भिरर्गला ॥४४॥
तेषामेकोऽधिराजोऽस्ति, सप्तलक्षतुरङ्गमः।
तुरङ्गायुतमानाश्चापरेऽपि स्युर्नरेश्वराः ॥४५॥
एको माण्डलिकस्तेषां, मैत्रिं कालकसूरिणा।
अनेककौतुकमेत्साहृतचित्तः कृतोऽथ सः ॥४६॥

असौ विश्वासतस्तस्य, वयस्यति तथा नृपः ।
तं विना न रतिस्तस्य, तं बहूक्तैर्यया क्षणम् ॥४७॥
सभायामुपविष्टस्य, मण्डलेशस्य सूरिणा ।
सुखेन तिष्ठतो गोष्ठ्यां, राजदूतः समाययौ ॥४८॥
प्रवेशितश्च विज्ञप्ते, प्रतीहारेण सोऽवदत् ।
प्राचीनरूढितो भक्त्या, गृह्यतां राजशासनम् ॥४९॥
असिधेनुं च भूपोऽथ, तद् गृहीत्वाऽऽशु मस्तके ।
ऊर्ध्वीभूयाथ संयोज्य, वाचयामास च स्वयम् ॥५०॥
इति कृत्वा विवर्णास्यो, वक्तुमप्यक्षमो नृपः ।
विलीनचित्तः श्यामाङ्गो, निःशब्दाषाढमेघवत् ॥५१॥
पृष्टश्चित्रान्मुनीन्द्रेण, प्रसादे स्वामिनः स्फुटे ।
आयाते प्राभृते हर्षस्थाने किं विपरीतता? ॥५२॥
तेनोचे मित्र! कोपोऽयं, न प्रसादः प्रभोर्ननु ।
प्रेष्यं मया शिरश्छित्वा, स्वीयं शस्त्रिकयाऽनया ॥५३॥
एवं कृते च वंशे नः, प्रभुत्वमवतिष्ठते ।
नो चेद् राज्यस्य राष्ट्रस्य, विनाशः समुपस्थितः ॥५४॥
शस्त्रिकायामथैतस्यां, षण्णवत्यङ्कदर्शनात् ।
मन्ये षण्णवतेः सामन्तानां क्रुद्धो धराधिपः ॥५५॥
सर्वेऽपि गुप्तमाहूय, सूरिभिस्तत्र मेलिताः ।
तरीभिः सिन्धुमुत्तीर्य, सुराष्ट्रां ते समाययुः ॥५६॥
घनागमे समायाते, तेषां गतिविलम्बके ।
विभज्य षण्णवत्यंशैस्तं देशं तेऽवतस्थिरे ॥५७॥
राजानस्ते तथा सूरा वाहिनीव्यूहवृद्धिना ।
राजहंसद्रुहा भूयस्तरवारितरङ्गिणा ॥५८॥
वलभिद्धनुरुल्लासवता चाशुगभीभृता ।
समारुध्यन्त मेघेन वलिष्ठेनेव शत्रुणा ॥५९॥
निर्गमय्यासनाद्युग्रमुपसर्गमुपस्थितम् ।
प्रापुर्घनात्ययं मित्रमिवाब्जास्य विकाशनम् ॥६०॥
परिपक्त्रिमवाक्शालिः, प्रसीदत्सर्वतोमुखः ।
अभूच्छरदृतुस्तेषामानन्दाय सुधीरिव ॥६१॥
सूरिणाऽथ सुहृद्राजा, प्रयाणेऽजल्प्यत स्फुटम् ।
स प्राह शम्बलं नास्ति, येन नो भावि शं बलम् ॥६२॥
श्रुत्वेति कुम्भकारस्य, गृह एकत्र जग्मिवान् ।
वह्निना पच्यमानं चेष्टकापाकं ददर्श च ॥६३॥

कनिष्ठिकानखं पूर्ण, चूर्णयोगस्य कस्यचित् ।
आक्षेपात् तत्र चिक्षेपाक्षेप्यशक्तिस्तदा गुरुः ॥६४॥
विध्यातेऽत्र यथावृगे, राज्ञः प्रोचाच यत् सखे!।
विभज्य हेम गृह्णीत, यात्रासंग्राहहेतवे ॥६५॥
तथेत्यादेशमाधाय, तेऽकुर्वन् पर्व सर्वतः ।
मास्थानिकं गजाश्वादिसैन्यपूजनपूर्वकम् ॥६६॥
पश्चाल-लाटराष्ट्रेशभूपान् जित्वाऽथ सर्वतः ।
शाका मालवसन्धि ते, प्रापुराक्रान्तविद्विषः ॥६७॥
श्रुत्वाऽपि वलमागच्छद्, विद्यासामर्थ्यगर्वितः ।
गर्दभिल्लनरेन्द्रो न, पुरीदुर्गमसज्जयत् ॥६८॥
अथाप शाखिसैन्यं च, विशालातलमेदिनीम् ।
पतङ्गसैन्यवत् सर्वप्राणिवर्गभयङ्करम् ॥६९॥
मध्यस्थो भूपतिः सोऽथ, गर्दभीविद्यया बले ।
नादर्युन्मादरीतिस्थः, सैन्यं सज्जयति स्म न ॥७०॥
कपिशीर्षेषु नो डिम्बा, कोट्टकोणेषु न भ्रसाः ।
विद्याधरीषु नो काण्डपूरणं चूरणं द्विषाम् ॥७१॥
न वा मटकपाटानि, पूःप्रतोलीष्वसज्जयत् ।
इति चारैः परिज्ञाय, सुहृद्भूपं जगौ गुरुः ॥७२॥
अनावृतं समीक्ष्येदं, दुर्गं मा भूरनुद्यमः ।
यदष्टमी-चतुर्दश्योरर्चयत्येष गर्दभीम् ॥७३॥
अष्टोत्तरसहस्रं च, जपत्येकाग्रमानसः ।
शब्दं करोति जापान्ते, विद्या सा रासभीनिभम् ॥७४॥
तं वृत्कारस्वरं घोरं, द्विपदो वा चतुष्पदः ।
यः शृणोति स वक्त्रेण, फेनं मुञ्चन् विपद्यते ॥७५॥
अर्धतृतीयगव्यूतमध्ये स्थेयं न केनचित् ।
आवासान् विरलान्! दत्वा स्यातव्यं सवलैर्नृपैः ॥७६॥
इत्याकर्ण्य कृते तत्र, देशे कालकसद्गुरुः ।
सुभटानां शतं सार्द्धं, प्रार्थयच्छब्दवेधिनाम् ॥७७॥
स्थापिताः स्वसमीपे ते, लब्धलक्षाः सुशिक्षिताः ।
स्वरकाले मुखं तस्या बभ्रुर्बाणैर्निषङ्गवत् ॥७८॥
सा मूर्ध्नि गर्दभिल्लस्य, कृत्वा विण्मूत्रमीर्ष्यया ।
हत्वा च पादघातेन, रोषेणान्तर्दधे खरी ॥७९॥
अबलोऽयमिति ख्यापयित्वा तेषां पुरो गुरुः ।
समग्रसैन्यमानीय, मानी तं दुर्गमाविशत् ॥८०॥

पातयित्वा धृतो बद्ध्वा, प्रपात्य च गुरोः पुरः ।
गर्दभिल्लो भटैर्मुक्तः, प्राह तं कालकप्रभुः ॥८१॥
साध्वी साध्वी त्वया पाप!, श्येनेन चटकेव यत् ।
नीता गुरुविनीताऽपि, तत्कर्मकुसुमं ह्यदः ॥८२॥
फलं तु नरकः प्रेत्य, तद् विबुध्याधुनाऽपि हि ।
उपशान्तः समादत्स्व, प्रायश्चित्तं शुभावहम् ॥८३॥
आराधकः परं लोकं, भविता रुचितं निजम् ।
विधेहीति श्रुतेर्दूनस्त्यक्तोऽरण्ये ततोऽभ्रमत् ॥८४॥
व्याघ्रेण भक्षितो भ्राम्यन्, दुर्गतो दुर्गतिं गतः ।
तादृक् साधुद्रुहामीदृग्, गतिरत्यल्पकं फलम् ॥८५॥
सूरेरादेशतो मित्रं, भूपः स्वामी ततोऽभवत् ।
विभज्य देशमन्येऽपि, तस्थुः शाखिनराधिपाः ॥८६॥
आरोपिता व्रते साध्वी, गुरुणाथ सरस्वती ।
आलोचितप्रतिक्रान्ता, गुणश्रेणिमवाप च ॥८७॥
विद्यादेव्यो यतः सर्वा अनिच्छुस्त्रीव्रतच्छिदः ।
कुप्यन्ति रावणोऽपीदृक्, सीतायां न दधौ हठम् ॥८८॥
एतादृक्शासनोन्नत्या, जैनतीर्थं प्रभावयन् ।
बोधयन् शाखिराजांश्च, कालकः सूरिराड् बभौ ॥८९॥
शकानां वंशमुच्छेद्य, कालेन कियताऽपि हि ।
राजा श्रीविक्रमादित्यः, सार्वभौमोपमोऽभवत् ॥९०॥
स चोन्नतमहासिद्धिः, सौवर्णपुरुषोदयात् ।
मेदिनीमनृणां कृत्वाऽचीकरद् वत्सरं निजम् ॥९१॥
ततो वर्षशते पञ्चत्रिंशता साधिके पुनः ।
तस्य राज्ञोऽन्वयं हत्वा, वत्सरः स्थापितः शकैः ॥९२॥
इति प्रसङ्गतोऽजल्पि, प्रस्तुतं प्रोच्यते ह्यदः ।
श्रीकालकप्रभुर्देशे, विजह्रे राजपूजितः ॥९३॥

( २ )

इतश्चास्ति पुरं लाटललाटतिलकप्रभम् ।
भृगुकच्छनृपस्तत्र, बलमित्रोऽभिधानतः ॥९४॥
भानुमित्राग्रजन्माऽसीत्, स्वस्रीयः कालकप्रभोः ।
स्वसा तयोश्च भानुश्रीः, बलभानुश्च तत्सुतः ॥९५॥ युग्मम् ॥
अन्यदा कालकाचार्यवृत्तं तैर्लोकतः श्रुतम् ।
तोपादाहूतये मन्त्री, तैर्निजः प्रैष्यत प्रभोः ॥९६॥

विहरन्तस्ततस्ते चाप्रतिबद्धं विशुद्धये ।
आययुर्नगरे तत्र, बहिश्च समवासरन् ॥९७॥
राजा श्रीबलमित्रोऽपि, ज्ञात्वाऽभिमुखमभ्यगात् ।
उत्सवातिशयात् सूरिप्रवेशं विदधे मुदा ॥९८॥
उपदेशामृतैस्तत्र, सिञ्चन् भव्यानसौ प्रभुः ।
पुष्करावर्त्तवत् तेषां, विश्वं तापमनीनशत् ॥९९॥
श्रीमच्छकुनिकातीर्थस्थितं श्रीमुनिसुव्रतम् ।
प्रणम्य तच्चरित्राख्यादिभिर्नृपमबोधयत् ॥१००॥
अन्येद्युस्तत्पुरोधाश्च, मिथ्यात्वग्रहसद्ग्रहः ।
कुविकल्पवितण्डाभिर्वदन् वादे जितः स तैः ॥१०१॥
ततोऽनुकूलवृत्त्याऽथ, तं सूरिमुपसर्गयन् ।
उवाच दम्भभक्त्या स, राजानमृजुचेतसम् ॥१०२॥
नाथामी गुरवो देवा इव पूज्या जगत्यपि ।
एतेषां पादुका पुण्या, जनैर्धार्या स्वमूर्धनि ॥१०३॥
किञ्चिद् विज्ञप्यते लोकभूपालानां हितं मया ।
अवधारय तच्चित्ते, भक्तिश्चेन्मातुले गुरौ ॥१०४॥
विशतां नगरान्तर्यच्चरणा बिम्बिताः पथि ।
उल्लङ्घ्यन्ते जनैरन्यैः, सामान्यैस्तदघं बहु ॥१०५॥
धर्मार्जनं तनीयोऽत्रापरं कुरु महामते ! ।
प्रतीत आर्जवाद् राजा, प्राहास्ते सङ्कटं महत् ॥१०६॥
विद्वांसो मातुलास्तीर्थरूपाः सर्वार्चिता इमे ।
तथा वर्षा अवस्थाप्य, पार्यन्ते प्रेषितुं किमु ॥१०७॥
द्विजः प्राह महीनाथ !, मन्त्रये ते हितं सुखम् ।
तव धर्मो यतस्ते च, प्रयास्यन्ति स्वयं सुखात् ॥१०८॥
नगरे डिण्डिमो वाद्यः, सर्वत्र स्वामिपूजिताः ।
प्रतिलाभ्या वराहारैर्गुरवो राजशासनात् ॥१०९॥
आहारमाधाकर्मादि, दृष्ट्वाऽनेषणयाऽन्वितम् ।
स्वयं ते निर्गमिष्यन्ति, काऽप्यश्लाघा न ते पुनः ॥११०॥
अस्त्वेवमिति राज्ञोक्ते, स तथेति व्यधात् पुरे ।
अनेषणां च ते दृष्ट्वा, यतयो गुरुमभ्यधुः ॥१११॥
प्रभो ! सर्वत्र मिष्टान्नाहारः संप्राप्यतेतराम् ।
गुरुराहोपसर्गोऽयं प्रत्यनीकादुपस्थितः ॥११२॥

गन्तव्यं तत् प्रतिष्ठानपुरे संयमयात्रया ।
श्रीसातवाहनो राजा, तत्र जैनो दृढव्रतः ॥११३॥

( ३ )

ततो यतिद्वयं तत्र, प्रैषि सङ्घाय सूरिभिः ।
प्राप्तेष्वस्मासु कर्त्तव्यं, पर्वपर्युषणं ध्रुवम् ॥११४॥
तौ तत्र सङ्गतौ संघमानितौ वाचिकं गुरोः ।
तत्राकथयतां मेने, तेनैतत् परया मुदा ॥११५॥
श्रीकालकप्रभुः प्राप, शनैस्तन्नगरं ततः ।
श्रीसातवाहनस्तस्य, प्रवेशोत्सवमातनोत् ॥११६॥
उपपर्युषणं तत्र, राजा व्यज्ञपयद् गुरुम् ।
अत्र देशे प्रभो ! भावी, शक्रध्वजमहोत्सवः ॥११७॥
नभस्यशुक्लपञ्चम्यां, ततः षष्ठ्यां विधीयताम् ।
स्वं पर्व नैकचित्तत्वं, धर्मे नो लोकपर्वणि ॥११८॥
प्रभुराह प्रजापाल !, पुरार्हद्गणभृद्गणः ।
पञ्चमीं नात्यगादेतत्, पर्वास्मद्गुरुगीरिति ॥११९॥
कम्पते मेरुचूलाऽपि, रविर्वा पश्चिमोदयः ।
नातिक्रामति पर्वेदं, पञ्चमीरजनीं ध्रुवम् ॥१२०॥
राजाऽवदच्चतुर्थ्यां तत्, पर्व पर्युषणं ततः ।
इत्थमस्तु गुरुः प्राह, पूर्वैरप्याहृतं ह्यदः ॥१२१॥
अर्वागपि यतः पर्युषणं कार्यमिति श्रुतिः ।
महीनाथस्ततः प्राह, हर्षादेतत् प्रियं प्रियम् ॥१२२॥
यतः कुहूदिने पर्वोपवासे पौषधस्थिताः ।
अन्तःपुरपुरन्ध्र्यो मे, पक्षादौ पारणाकृतः ॥१२३॥
तत्राष्टमं विधातॄणां, निर्ग्रन्थानां महात्मनाम् ।
भवतु प्राशुकाहारैः, श्रेष्ठमुत्तरपारणम् ॥१२४॥
उवाच प्रभुरप्येतन्महादानानि पञ्च यत् ।
निस्तारयन्ति दत्तानि, जीवं दुष्कर्मसागरात् ॥१२५॥
पथश्रान्ते तथा ग्लाने, कृतलोचे बहुश्रुते ।
दानं महाफलं दत्तं, तथा चोत्तरपारणे ॥१२६॥
ततःप्रभृति पञ्चम्याश्चतुर्थ्यामागतं ह्यदः ।
कषायोपशमे हेतुः, पर्व सांवत्सरं महत् ॥१२७॥
श्रीमत्कालकसूरीणामेवं कत्यपि वासराः ।
जग्मुः परमया तुष्ट्या, कुर्वतां शासनोन्नतिम् ॥१२८॥

अन्येद्युः कर्मदोषेण, सूरीणां तादृशामपि ।
आसन्नविनयाः शिष्या दुर्गतौ दोहदप्रदाः ॥१२९॥
अथ शय्यातरं प्राहुः, सूरयोऽवितथं वचः ।
कर्मबन्धनिषेधाय, यास्यामो वयमन्यतः ॥१३०॥
त्वया कथ्यममीषां च, प्रियकर्कशवाग्भरैः ।
शिक्षयित्वा विशालायां, प्रशिष्यान्ते ययौ गुरुः ॥१३१॥
इत्युक्त्वाऽगात्, प्रभुस्तत्र, तद्विनेयाः प्रगे ततः ।
अपश्यन्तो गुरूनूचुः, परस्परमवाङ्मुखाः ॥१३२॥
एष शय्यातरः पूज्यशुद्धिं जानाति निश्चितम् ।
एष दुर्विनयोऽस्माकं, शाखाभिर्विस्तृतोऽधुना ॥१३३॥
पृष्टस्तैः स यथौचित्यमुक्त्वोवाच प्रभुस्थितिम् ।
ततस्ते संचरन्ति स्मोज्जयिनीं प्रति वेगतः ॥१३४॥
गच्छन्तोऽध्वनि लोकैश्चानुयुक्ता अवदन् मृषा ।
पश्चादग्रस्थिता अग्रे, पश्चात्स्या प्रभवो ननु ॥१३५॥
यान्तस्तन्नामशृङ्गारात्, पथि लोकेन पूजिताः ।
नारी-सेवक-शिष्याणामवज्ञा स्वामिनं विना ॥१३६॥
इतः श्रीकालकः सूरिर्वस्त्रवेष्टितरत्नवत् ।
यत्याश्रये विशालायां, प्राविशच्छन्नदीधितिः ॥१३७॥
प्रशिष्यः सागरः सूरिस्तत्र व्याख्याति चागमम् ।
तेन नो विनयः सूरेरभ्युत्थानादिको दधे ॥१३८॥
तत ईर्यां प्रतिक्रम्य, कोणे क्वापि निर्जने ।
परमेष्ठिपरावर्त्तं, कुर्वन् तस्थावसङ्गधीः ॥१३९॥
देशनाऽनन्तरं भ्राम्यँस्तत्रत्यः सूरिराह च ।
किञ्चित् तपोनिधे ! जीर्ण !, पृच्छ सन्देहमादृतः ॥१४०॥
अकिञ्चिज्ज्ञो जरत्त्वेन, नावगच्छामि ते वचः ।
तथाऽप्यापृच्छ्य येनाहं, संशयापगमक्षमः ॥१४१॥
अष्टपुष्पीमथो पृष्टो, दुर्गमां सुगमामिव ।
गर्वाद् यत्किञ्चन व्याख्यादनादरपरायणः ॥१४२॥
दिनैः कैश्चित् ततो गच्छ आगच्छत् तदुपाश्रयम् ।
सूरिणाऽभ्युत्थितोऽवादीद्, गुरवोऽग्रे समाययुः ॥१४३॥
वास्तव्या अवदन् वृद्धं, विनैकं कोऽपि नाययौ ।
तेष्वागच्छत्सु गच्छोऽभ्युदस्थात् सूरिश्च सत्रपः ॥१४४॥

गुरुनक्षमयद् गच्छः, पङ्गुग्नः सूरिरप्यमून् ।
तं च तं चानुशिष्यैते, सूरिमित्यमबोधयन् ॥१४५॥
सिकतासंभृतः प्रस्थः, स्थाने स्थाने विरेचितः ।
रिक्ते तत्रावदद् वत्स !, दृष्टान्तं विद्ध्यमूदृशम् ॥१४६॥
श्रीसुधर्मा ततो जम्बूः, श्रुतकेवलिनस्ततः ।
षट्स्थाने पातितास्ते च, श्रुते न्यूनत्वमापयुः ॥१४७॥
ततोऽप्यनु प्रवृत्तेषु, न्यूनं न्यूनतरं श्रुतम् ।
अस्मद्गुरुषु यादृक्षं, तादृग् न मयि निष्प्रभे ॥१४८॥
यादृग् मे त्वद्गुरोस्तन्न, यादृक् तस्य न तेऽस्ति तत् ।
सर्वथा मा कृथा वत्स !, गर्वं सर्वङ्कषं ततः ॥१४९॥
अष्टपुष्पीं च तत्पृष्टः, प्रभुर्व्याख्यानयत् तदा ।
अहिंसा-सूनृता-ऽस्तेय-ब्रह्मा-ऽकिञ्चनता तथा ॥१५०॥
राग-द्वेषपरीहारो, धर्मध्यानं च सप्तमम् ।
शुक्लध्यानमष्टमं च, पुष्पैरात्माऽर्चनाच्छिवम् ॥१५१॥
एवं च शिक्षयित्वा तं, मार्दवातिशये स्थितम् ।
आपृच्छ्य व्यचरत् सङ्गहीनोऽन्यत्र पवित्रधीः ॥१५२॥

( ५ )

श्रीसीमन्धरतीर्थेशनिगोदाख्यानपूर्वतः ।
इन्द्रप्रश्नादिकं ज्ञेयमार्यरक्षितकक्षया ॥१५३॥
श्रीजैनशासनक्षोणीसमुद्धारादिकच्छपः ।
श्रीकालकप्रभुः प्रायात्, प्रायाद् देवभुवं शमी ॥१५४॥
श्रीमत्कालकसूरिसंयमनिधेर्वृत्तं प्रवृत्तं श्रुतात्,
श्रुत्वाऽत्मीयगुरोर्मुखादवितथख्यातप्रभावोदयम् ।
संदृब्धं मयका तमस्ततिहरं श्रेयःश्रिये जायतां,
श्रीसंघस्य पठन्तु तच्च विबुधा नन्द्याच्च कोटीः समाः ॥१५५॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः प्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीराम-लक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीकालकाख्यानकं
श्रीप्रद्युम्नमुनीन्दुना विशदतः शृङ्गश्चतुर्थोऽभवत् ॥१५६॥

इति श्रीकालिकाचार्यप्रबन्धः ॥ ग्रन्थाग्रं० १५७ । अ. २२ ॥

प्रभावकचरितग्रन्थकृत्प्रशस्तिः—

भास्वत्पात्रं कवि-मुनि-बुधभ्राजितो राजसेव्यः,
सर्वेष्टार्थप्रदगुरुल्लसत्कल्पवृक्षावदातः ।
श्रीजैनांह्रिश्रयशुचिशिराः सिद्धिमद्भद्रशालो,
गच्छश्चान्द्रः सुरगिरितुलामश्नुवानः समस्ति ॥१॥

प्रद्युम्नसूरिरिति तत्र पुरा बभूव,
मन्दारपादपतुलः कलितोरुशाखः ।
यत्सङ्गमामृतरसैर्बहवः सुधर्मा-
धीशा भवन्ति सुधियः सुमनोभिरामाः ॥२॥

अल्लूसभायां विजिते दिगम्बरे, तदीयपक्षः किल कोशरक्षकः ।
दातुं प्रभोरेकपटं समानयत्, तमेकपट्टं जगृहे सुधीषु यः ॥३॥

शिष्योऽस्याभयदेवसूरिरभवज्जाड्यान्धकारं हरन्,
गोभिर्भास्करवत् परां विरचयन् भव्याप्तवर्गे मुदम् ।
ग्रन्थो वादमहार्णवोऽस्य विदितः प्रौढप्रमेयोर्मिभृद्,
दत्तेऽर्थे जिनशासनप्रवहणे सांयात्रिकाणां ध्रुवम् ॥४॥

त्रिभुवनगिरिस्वामी श्रीमान् स कर्दमभूपति—
स्तदुप समभूत् शिष्यः श्रीमद्धनेश्वरसंज्ञया ।
अजनि सुगुरुस्तत्पट्टेऽस्मात् प्रभृत्यवनिस्तुतः
तदनु विहितो विश्वे गच्छः स राजपदोत्तरः ॥५॥

सुगुरुरजितसिंहस्तत्पदाम्भोजभानुः
समजनि जनितश्रीर्भव्यपङ्केरुहाणाम् ।
वचनकरवितानं यस्य देदीप्यमानं,
जडगतमपि सोढुं दुर्दृशोर्न क्षमन्ते ॥६॥

श्रीवर्द्धमानसुगुरुः, कर्कोन्नतधामसङ्गतस्तदनु ।
मतसञ्चारिशरणः, समजनि जनलग्नदोषहरः ॥७॥

तत्पट्टभूमिरुहपोषतपात्ययश्रीः, श्रीशीलभद्र इति सूरिपदं प्रपेदे ।
धर्मोपदेशजलवाहजलैर्यदीयः, प्रापोन्नतिं जगति कीर्त्तिलतावितानः ॥८॥

तदंह्रिसरसीहंसः, सूरिः श्रीचन्द्र इत्यभूत् ।
विवेचकः शुचिः सद्भिस्तद्वाचानुपजीवनात् ॥९॥

अर्थप्रकाशिका शास्त्रचक्षुषाममृताञ्जनम् ।
घनसाररसाढ्या यन्मतिः पुन्नागरङ्गभृत् ॥१०॥

सूरिः श्रीभरतेश्वरस्तदनु च प्रामाणिकग्रामणी-
　　र्यन्नामस्मृतितोऽप्यघं हरति च श्रीधर्मघोषप्रभुः ।
कल्याणावलिकन्दलालिजलदः, श्रीसर्वदेवो गुरु-
　　श्चत्वारः किल शीलभद्रसुगुरोः शिष्या नरेन्द्रार्चिताः ॥११॥
श्रीपात्रं स जिनेश्वरप्रभुरभूत् संघाम्बुधौ चन्द्रमाः,
　　सूरिः श्रीजिनदत्त इत्युदितधीरुन्निद्रविद्याद्युतिः ।
चारित्रामलशैलनन्दनवनं श्रीपद्मदेवप्रभुः,
　　श्रीश्रीचन्द्रमुनीश्वरस्य जयिनः शिष्या अभूवन्नमी ॥१२॥
श्रीसङ्घरोहणधराधरचारुरत्नं, श्रीपूर्णभद्रगुरुरभ्युदितः पदेऽस्य ।
यत्सन्निधिस्थितिभृतो भुवि भव्यसार्था वस्तूनि विश्वविषयानि विलोकयन्ति ॥१३॥
तत्पट्टोदयपर्वतामृतरुचिः प्रीणँश्चकोरव्रजं,
　　श्रीचन्द्रप्रभसूरिरद्भुतमतिज्योत्स्नानिधानं बभौ ।
आश्चर्यं न कलङ्कधाम तमसाऽनुल्लङ्घ्यमूर्तिं भवं,
　　पाथोधिं क्षणुते विनम्रकमलोल्लासी न दोषाकरः ॥१४॥
आचार्यः श्रीप्रभाचन्द्रस्तत्पादाम्भोजषट्पदः ।
चित्रं यः सुमनःस्थोऽपि, सदानम्रगुरुक्रमः ॥१५॥
श्रीहेमचन्द्रसूरीणामनुध्यानप्रवृत्तितः ।
पर्वणः परिशिष्टस्य, दृष्टेः सम्पुटवासनः ॥१६॥
श्रीवज्रानुप्रवृत्तप्रकटमुनिपतिप्रष्ठवृत्तानि तत्तद्-
　　ग्रन्थेभ्यः कानिचिच्च श्रुतधरमुखतः कानिचित् संकलय्य ।
दुष्प्रापत्वादमीषां विशकलिततयैकत्र चित्रावदातं,
　　जिज्ञासैकाग्रहाणामधिगतविधयेऽभ्युच्चयं स प्रतेने ॥१७॥ त्रिभिर्विशेषकम् ॥
अत्र क्षूणं हि यत् किञ्चित्, संप्रदायविभेदतः ।
मयि प्रसादमाधाय, तच्छोधयत कोविदाः ॥१८॥

यतः—

आराधितं मया शून्यं, यथा तुष्टं स्वतामदात् ।
निजोक्तौ स्थापितं तत् प्राक्, कथाकन्थीकृतास्ततः ॥१९॥
रोदोरन्ध्रगसिद्धकिन्नरगणानुल्लङ्घ्यशृङ्गस्थिति-
　　स्तुङ्गत्वोदितवृत्तशैवधिरतिप्रौढार्थसंपत्तिकृत् ।
पूरत्नप्रभया तिरस्कृतपरज्योतिःप्रकाशोदयः,
　　श्रीपूर्वर्षिचरित्ररोहणगिरौ स्याद्वारवीन्दुर्भुवः ॥२०॥



चित्र ६८ Fig. 68



चित्र ६९ Fig. 69



चित्र ७० Fig. 70



चित्र ७१ Fig. 71

श्रीमद्युम्नगुरोर्हिमांशुविशदो बोधः शुचेः सङ्गतो,
मिश्रो रक्तरुचा मम मतिपदास्फुर्जद्यशःपूरुपः ।
ज्ञानश्रीपुरतः पदार्थघटनाबिम्बद्वयोट्टङ्कनाद्,
जातो ग्रन्थमिषेण साक्षरशुचिर्द्रम्मश्चिरं नन्दतु ॥२१॥

वेदानल-शिखि-शशधर(१३३४)वर्षे चैत्रस्य धवलसप्तम्याम् ।
शुक्रे पुनर्वसुदिने, संपूर्णं पूर्वऋषिचरितम् ॥२२॥
शिक्षाप्रसादवशतः स्वगुरोर्मयैनमायासमत्र दधता यदवापि पुण्यम् ।
व्याख्यानसक्तमनसः श्रवणादराश्च, श्रेयस्सुसङ्गममनुत्तरमाप्नुवन्तु ॥२३॥
ग्रन्थस्य मानमस्य, मत्यक्षरगणनया सुनिर्णीतम् ।
पञ्चसहस्राः सप्त च, शतानि चतुरधिकसप्ततियुतानि ॥२४॥

प्रशस्तिश्लोक४० ॥ शिवमस्तु ॥

# [१८]

## अज्ञातसूरिविरचिता

# कालिकाचार्यकथा ।



श्रीवीरवाक्यानुमतं सुपर्व, कृवं यथा पर्युषणाऽऽख्यमेतत् ।
श्रीकालिकाचार्यवरेण सद्य, तथा चतुर्थ्यां शृणु पञ्चमीतः ॥१॥

श्रीय(ग)न्महावीर चउवीसमु तीर्थंकर नमस्करीनइं श्रीकालिकसूरि आचार्यइं श्रीपंचमी थकुं पजूसणनूं पर्व चउ[?]णिउं । श्रीमहावीरनइं वचनिइं । तेह वात ऊपरि आजनइ दिवसि श्रीकल्पना आठ व्याख्यात(न)नी वाचना ए नउसी(मी) वाचना श्रीकालिकसूरिनी कथा कहीइ छइ ॥१॥

समग्रदेशागतवस्तुसारं, पुरं धरावासमिहास्ति तारम् ।
तत्रारिभूपालकरीन्द्रसिंहो, भूवल्लभोऽभूद् भुवि वज्रसिंहः ॥२॥

धारावास इसिइं नामिइं पुर नगर मालव देशमाहि छइ । पुण ते नगर किसिउं जाणिवूं । 'समग्रदेशागत[व]वस्तुसारम्' समग्र सघला देश थकी आगत आवी वस्तु तेणिइं करी सार मनोज्ञ छइ । ए(आ) नगर सघलांमाहि [.] छइ । तेणिइं नगरि वज्रसिंह इसिइं नामिइं राज्य पालइ छइ । राजा किसिउ छइ अरि वइरी रूपीया करीन्द्र तेह कुंभस्थल विदारिवानइं सिंह प्राय सिंघथीपु वर्त्तइ ॥२॥

लावण्यपीयूषपवित्रगात्रा, सद्धर्मपात्रानुगतिः सदैव ।
तस्यानविद्याविविशिष्टरूपा, राज्ञी च नाम्ना सुरसुन्दरीति ॥३॥

ते वज्रसिंह रायनइं सुरसुंदरी राणी छइ। पुण ते राणी किसी छइ? लावण्यरूपीउं पीयूष अमृत तेणिइं जेह राणीनु गात्र देह पवित्र छइ। सत प्रधान [ध]र्मनूं पात्र स्थानक छइ। अनइ वली राणी केहवी छइ? अतिहिं विशिष्ट रंभा तिलोत्तमा इंद्रनी इंद्राणी तेपाहिं अतिहिं विशिष्ट रूप छइ ॥३॥

तत्कुक्षिभूः कालकनामधेयः, कौमारुरूपोऽजनि भूपसूनुः ।
सरस्वती रूपवती सुशीलवती स्वसा तस्य नरेन्द्रसूनोः ॥४॥

ते सु[र]सुंदरी राणीनी कूप(ख)इं ऊपनु कालिक इसिइं नामिइं, नामिइं रूपवंति सुसीलावती लावण्यवती भ वहिनी हुंती वर्त्तइ ॥४॥

अथान्यदोद्यानवने कुमारो, गतो युतः पञ्चशतैश्च सुभिः ।
दृष्ट्वा मुनीन्द्रं गुणसुन्दराख्यं, नत्वोपविष्टो गुरुसंनिधाने ॥५॥

अथ एतलानु अनन्तर ते कालिक कुमर पांचसइं पायके परवरिउ उद्यानवनमाहिं गिउ। तुरंगम खे... भणीनइ। तेसिइ ते वनमाहिं श्रीगुणसुंदरसूरि पुहुता। वृक्ष आंबानु ते हेठलि बइठा दीठा। कालिक कुमरिइं गुरु द... पूठिइं तुरंगमनी रामति मूकीनइ गुरु वांद्या। आगलि जई बइठु परिवारसहित ॥५॥

विद्युल्लतानेकपकर्णताललीलायितं वीक्ष्य नरेन्द्रलक्ष्म्याः ।
युष्मादृशाः किं प्रपतन्ति कूपे, भवस्वरूपे सुविवेकिनोऽपि ॥६॥

हे नरेंद्र! अहो राजन्! तम्हश्रीपा पुण्यवंत भाग्यवंत संसाररूपीया कुयामाहिं किस्या कारण पडइं छ... संसार केहवु छइ? जिसिउ वीजनु झात्कार चपल हुइ। जिस्या गजेंद्र हस्तीना कर्ण कान चपल हुइं। जिसिउं संध्य... राग क्षण एकमाहिं विश्रार थइ। जिसिउं अश्व घोडातणु पुच्छ चपल हुइ। जिस्या समुद्रनी कल्लोल चपल हुइं। राज्यनी लक्ष्मी चपल छइ। तम्हश्रीपानइं एहवा संसार चपलमाहिं राज्यलक्ष्मी अनेरीइ लक्ष्मी सर्वमंडाण चपल ध... तम्हो सुविवेकी पुण्यवंत। एहवइ संसारि वासि तम्हनइ वसवा वुकु नही ॥६॥

एवं परिज्ञाय कुमार! शुद्धबुद्धिं कुरुष्वाशु सुधर्ममार्गे ।
आकर्ण्य कर्णामृतवृष्टिकल्पं, गुरोर्वचः शीघ्रमिति प्रबुद्धः ॥७॥

एहवु गुरुनु उपदेसां सांभलीनइ कालिक कुमरनइ धर्मकरणी करवानी बुद्धि ऊपनी। गुरुनां वचन अमृत सांभलीनइ संसारनइ विषइ विराग ऊपनु। मनि वैराग्य ऊपनुं। संसार अणगतु(मु) थिउ। चारित्र उपरि भाव ऊपनु॥

आदात् तदा पञ्चशतीपदातियुक्तो व्रतं सूरिपदं स लेभे ।
सरस्वती तद्भगिनी च पश्चाज्जग्राह दीक्षां निजबन्धुबोधात् ॥८॥

तदा तेणिइ समइ तेणिइं प्रस्तावि कालिक कुमरिइं वैराग्यनइ योगिइं माता पिता मोकलावी प्रीछवीनइ ...ण सुंदरसूरि कन्हलि दीक्षा लीधी। पांचसइं पायके कालिककुमर साथइं दीक्षा लीधी। अनइ केतइ कालि ते का... रिषिनइ आचार्य पद हवुं गच्छनायक कहवा। अनइ सरस्वती वहिनिइं ति वार पूठिइ केतलइं कालि गिइं हुंतइ अ... भाइ कालिककुमर कन्हलि दीक्षा लीधी ॥८॥

श्रीकालिकाचार्यवरा धरायां, कुर्वन्ति भव्यावनिधर्मवृष्टिम् ।
अथान्यदाऽवन्तिपुरीमगुस्ते, सरस्वती चापि जगाम तत्र ॥९॥

१ कालिक° P । २ कालानुरूपो S । ३ °तो यतः S ।

ते श्रीकालिकसूरि पृथ्वीमंडलि भव्यजीव रूपिणी पृथ्वीइं धर्मवृष्टि करता विहारक्रम करइ छइ। एकवार फरता अवंती कहता ऊजेणीइ पुहुता। सरस्वती महासती साथिइं विहारक्रम करती ऊजेणीइं पुहती ॥९॥

साध्वीसमेताऽपि गताऽथ बाह्यभूमौ नरेन्द्रेण निरीक्षिता सा।
ईदृक्सुरूपा यदियं सुशीला, नूनं वराको मृत एव कामः ॥१०॥

अथ एतलानु अनंतर ते सरस्वती महासती एक वार बाहिरि भूमि पुहती हती। तेसिइ गर्दभिल्ल राजा गिउ हतु। ते महासती दृष्टिइ दीठी तिसिइ मनमाहि चींतववा लागु। नूनं निश्चइ काम कंदर्प जीवतु नथी मूइ वर्ण-जु एहवी रूपवंति स्त्री अनइ सुशील वर्त्तइ। ए वात आयुक्ती जाणीइ। माहरइ एहवी स्त्री घरि हुइ माहरउं भाग्य ॥१०॥

श्रीकालिकाचार्यसहोदरस्त्वं, पूत्कुर्वती ही जिनशासनेश!।
यद्गर्दभिल्लेन नृपाधमेन, मां नीयमानां निजवेश्म रक्ष ॥११॥

तिसिइ गर्दभिल्लराइ सयज्ञां(संज्ञा) करी सरस्वती महासती अपहरावी। महासती तिसिइ पोकारि गाढिइं लागी। अहो श्रीकालिकाचार्य! अहो श्रीजिनशासनेश! राजान सघलामाहि अधमाधम गर्दभिल्ल महापापी राजा अपहरी जाइ छइ। आपणइ घरि लेइ जाइ छइ राषु(खु) राषु(खु) ॥११॥

इति ब्रुवाणा कुनृपेण पुम्भिर्नीता निजं धाम महासती सा।
ज्ञात्वा च वृत्तान्तमथैनमुच्चैश्चुकोप सूरिर्गुणलब्धिभूमिः ॥१२॥

तदा तेणिइ समइ ते सरस्वती महासती ते पापिष्ट गर्दभिल्लरायने सेवकें रायना गृहांगणमाहि लीधी। ति श्रीकालिकसूरि आचार्ये ते वात सांभली। ति वारइं अत्यंत अतिहि कोप चडिउ। प्रवाहिइं ते कालिकाचार्य समग्र भूमिका छइं। पुण जिनशासनि उड्डाहनु कारणहार ते ऊपरि कोप थाइ एतलइं युक्त छइ ॥१२॥

श्रीकालिकाचार्यगुरुर्नृपान्ते, जगाम कामं नयवाक्यपूर्वम्।
नृपं जगादेति नरेन्द्र! मुञ्च, स्वसारमेतां मम यद्व्रतस्थाम् ॥१३॥

श्रीकालिकसूरि आचार्य रायनइ समीपि गिआ। अनेक ज्ञा(न्या)यनां वचन बोल्यां ते राजान्याय धर्मनुं पालक ॥ चहिनि व्रत पालइ छइ। ते मेल्हि जिम आपणुं व्रत रूडी परिइं पालइ ते व्रतनु विभाग तुझनइ आवइ ॥१३॥

अन्योऽपि यो दुष्टमतिः कुशीलो, भवेत् त्वया स प्रतिषेध्य एव।
अन्यायमार्गे स्वयमेव गच्छन्, न लज्जसे सत्यमिदं हि जातम् ॥१४॥

अहो राजन्! अनेरइ जे कोइ दुष्टमति हुइ, कुशील हुइ कुआचारि हो(हु)इ, तेहनइ राजा सीषा(खा)मण तेहनइ अन्याय करतां वारइ। तूं एवडु पृथ्वीपति राजा स्वयमेव करतउ हुंतउ लाजतउ नथी। एतलइं ए वात हुवी। किमी ते वार्ता? ॥१४॥

+यत्रास्ति राजा स्वयमेव चौरो, भाण्डीवहो यत्र पुरोहितश्च।
वनं भजध्वं ननु नागरा भो!, यतः शरण्याद् भयमत्र जातम् ॥१५॥

जिम लोकं माहिल्ल ऊषा(खा)ण कहवाइ ते हवडां खरउ ऊषा(खा)णु दीसइ छइ। जेणिइं नगरि राजा

+ अन्यमुद्रतासाप्य ॥

चोर हुइ डीलिइं चोरी करइ अन[इं] पुरोहित डीलि भाढीतु पाडणहार कलाली हुइ तेणिइं नगरि अहो नागरिक वनवास लिउ तउ छूटउ । बीजी परिइं तिहां रहिया वणसीजीइ । किस्या भणी ? जिहां थकुं शरण जोईइ तिहां जि भय ऊपजइ तउ किसिउं कीजइ ? ॥१५॥

नरेन्द्रकन्याः किल रूपवत्यस्तवावरोधे ननु सन्ति वह्व्यः ।
तपःकृशां जल्लभरातिजीर्णवस्त्रां विमुञ्चाशु मम स्वसारम् ॥१६॥

अहो राजन् ! ताहरी आज्ञाना पालणहार अनेक राजान अनेक व्यवहारीया प्रमुख लोक तेहनी कन्या तम्हारी आज्ञामाहि छइं । तेहनूं पाणिग्रहण करि । पुण ए महासती तपिइं करी दूबली श्लेष्मां करी भरी जतिर्जी पहिरिणहारि माहरी बहिनि मूंकि ॥१६॥

निशम्य सूरीश्वरवाक्यमेतन्न भाषते किञ्चिदिह क्षितीशः ।
श्रीकालिकाचार्यवरोऽथ संघस्याग्रे स्ववृत्तान्तमवेदयत् तत् ॥१७॥

श्रीकालिकसूरिनुं वचनं सांभलीनइं राजा गर्दभिल्ल वलकु(तु) ऊतर न आपइ न बोलइ । श्रीकालिकसूरि पोसालइ आवी समग्र सघलु संघ तेडावीनइ तेह आगलि सघलु वृत्तांत कहिउ ॥१७॥

संघोऽपि भूपस्य सभासमक्षं, दक्षं वचोऽभापत यन्नरेन्द्र ! ।
न युज्यते ते यदिदं कुकर्म, कर्तुं प्रभो ! पासि पितेव लोकम् ॥१८॥

ति वार पूठिइं श्रीसंघ सघलु मिली रायनी सभां गिउ । राय वीनविउ, अहो नरेंद्र ! तुं प्रजालोकनइं परिपालअं । तुझ रहिं ए कुकु(क)र्म करवा युक्त नही । तुझ रहिं ए अन्याय करवा युक्त नही ॥१८॥

इति ब्रुवाणेऽपि यथार्थमुच्चैः, संघे न चामुञ्चदसौ महीशः ।
महासतीं तामिति तन्निशम्य, *कोपेन सन्धां कुरुते मुनीशः ॥१९॥

श्रीसंघिइं रायनइं वीनती कीधी । यथार्थ वात कही । पुण राजाइं सर्वथा न मूंकी । राजा वलतु ऊतरइ न पछइ श्री[सं]घिइं तिहां थकइ आवी गुरु वीनव्या । पछइ गुरे श्रीसंघ आगलि प्रतिज्ञा कीधी ॥१९॥

ये प्रत्यनीका जिनशासनस्य, संघस्य ये चाशुभवर्णवाचः ।
उपेक्षकोड्डाहकरा धरायां, तेषामहं यामि गतिं सदैव ॥२०॥

जे मनुष्य जिनशासन ऊपर वैरभार वहइं महाप्रत्यनीक हुइ । अनइ जे वली जिनशास[न]नां अवर्णव ब जिनशासनि उड्डाह करइं तेहवा मनुष्यनइं सीषा(खा)मण देउं । तेहनी गतिइं सदाइ जाउं तेहनुं निवारिवुं करउं ॥२

यद्येनमुर्वीपतिगर्दभिल्लं, कोशेन पुत्रैः प्रबलं च राज्यात् ।
नोन्मूलयामीति कृतप्रतिज्ञो, विधाय वेषं ग्रहिलानुरूपम् ॥२१॥

माहरा जाण्यानुं प्रमाण जु ए गर्दभिल्ल राजा बेटासहित भंडारसहित अंतेउरसहित राज्य पालतु उन्मूली लांखू तु कहिज्यो । इसी प्रतिज्ञा श्रीसंघ आगलि कीधी । प्रतिज्ञा कीधा पूठिइं श्रीकालिकसूरे गहिलानु वेस कीधु ॥२१

भ्रमत्यदः कर्दमलिप्तगात्रः, सर्वत्र जल्पन् नगरीं विशालाम् ।
श्रीगर्दभिल्लो नृपतिस्ततः किं, भो ! रम्यमन्तःपुरमस्य किं वा ॥२२॥–त्रिभिर्विशेषकम्[४] ॥

* सीताद् यथा चन्दनातिघृष्टात् ॥ लम्पटापराधे गर्दभिल्लं धृत्वा नोत्पाटयेऽहं तदनु च कालिकाचार्य एषः–इति

४ युग्मम् P ।

अथ एतला अनंतर श्रीकालिकसूरि आपणुं शरीर कादवि खरडी त्रिक चतुष्क चाचरि भ्रमण करतु हीडइ । मुखिइं इसिउं बोलइ । विशाल(ला) नगरीमाहि श्रीगर्दभिल राजा राज्य पालइ छइ तु किसिउं ! अथवा ए रायनइं अंतःपुर रूडुं छइ तु किसिउं ! इसिउ वच[न] नगरी भमतु बोलइ । प्रथिलपणइं करी बाह्य प्रकारिइं अंतरग साजापणुं छइ ॥२२॥

इत्यादि जल्पन्तमसत्प्रलापं, मुनीश्वरं वीक्ष्य न्यजिज्ञपंस्तम् ।
नृपं कुलामात्यवरा वरेण्यं, जातं न राजन्निति मुञ्च साध्वीम् ॥२३॥

श्रीकालिकसूरि ग्रथिलपणइं बोलतु सांभली रायना घरना कुलामात्य रायनइं वीनवचा लागा । अहो राजन् ! अम्हो ताहरा राज्यना कुलामात्य वीनवुं छउं । वीनती अवधारि । ए साध्वी महासती मूंकि परही । तुं ज्ञा(न्या)यवंत राजा तुझ रहइं ए साध्वी राषि(खि)वा युक्तु नही, परही मूंकि ॥२३॥

शिक्षां दद्ध्वं निजपितृ-बन्धु-पुत्रेषु गच्छन्तु ममाग्रदृष्टेः ।
श्रुत्वेति सूरिर्गत एव सिन्धोर्नद्यास्तटं पश्चिमपार्श्वकूलम् ॥२४॥

राय आ(अ)मात्य प्रतिइं कहवा लागु, अहो अमात्यो ! तम्हो आपणइ घरि जई बेटा बेटी प्रमुख कुटुंबनइं शीषा(खा)मण दिउ । माहरी दृष्टि आगलि थका परहा जाउ । रहिसिउ तु नही भला । आ(अ)मात्ये पाछा आवी आचार्यनइं जीणाविउं । ति वार पूठिइं श्रीकालिकसूरि भले शकुने चाल्या । पश्चिम दिसिइं सिंधु नही(दी)नइं पश्चिम दिशिनइं तटि पेलइ कांठइ जई रह्या ॥२४॥

ये तेषु देशेषु भवन्ति भूपास्ते साहयः प्रौढतमस्य तेषु ।
एकस्य साहेः स गृहेऽवसच्च, सदा सुदैवज्ञनिमित्तविज्ञः ॥२५॥

जे तेणिइं देसि राजान हुइं ते राय सविहुनइं साहि इंसिउं नाम कहीइ । तिहां छन्नूं राय मोटा छइं ते माहि मोटेरु एक साहि छइ तेनइ (तेह)नी उलग करवा लागा । श्रीकालिकसूरि ज्योतिष्क समग्र जाणइं । निमित्त सर्व जाणइं ॥ २५ ॥

अनागतातीतनिमित्तभावैर्वशीकृतः सूरवरैः स साहिः ।
भक्तिं विधत्ते विविधां गुरूणां, सर्वत्र पूज्यो लभते हि पूजाम् ॥२६॥

श्रीकालिकसूरि आचार्यें अनागत ज्ञान अतीत ज्ञान वर्तमान ज्ञाननइं कहवइं । ते वडु साहि राजा आपणइ वशि कीधउ । ते साहि गुरुनी भक्ति घणी करइ । एतलइं युक्तु छइ । जे माहि गुण हुइं । रूडे गुणे करी पूज्य सर्वत्र सघलइ पूजा लहइ ॥ २६ ॥

तमन्यदा कृष्णमुखं विलोक्य, पप्रच्छ साहिं मुनिपः किमेतत् ? ।
तेनाचचक्षे मम योऽस्ति राजा, साहानसाहिः स च मन्यतेऽत्र ॥२७॥

एकवार आचार्यें साहि राजा फाउ मरणु दीठु । जीवतव्यनी आशा गई । इंगित दीठउ । तिवारइं गुरे पूछिउं । आज श्याममुखा किस्या कारण ! तेणिइं साहिइं कहिउं । अम्ह छन्नूं रायनु स्वामी मूल्यु साहानुसाहि वडु ठाकुर छइ ते सा(हा)नुसाहिनइं अम्ह छन्नूं ऊपरि रायना मस्तक छइं ॥ २७ ॥

तेनात्र छेकः प्रहितो ममेति, स्वदस्यकं पीततरं महेयम् ।
पश्चाधिपाया नवनैर्नृपाणां, गुमानुरूपश्छल एप मार्गः ॥२८॥

---

१ °छेः १° P । २ °हाकुला° P ।

ते साहानुसाहिनइं कुणिहि अम्हारयं वयरीइं चाडी कीधी । तेणिइं करीय तु कोप हूउ । मझनइं लेख मो... छइ । आपणुं मस्तक मोकले जिम ताहरउ वेटउ राज्य पालइ । नहीतरि समर्थ थई रहिजे । एहवु आदेश आविउ छइ जु मस्तक मोकलीइ तु कुटंब परिवारनूं सूत्र रहइ नहीतरि कुल क्षय हुइ । एहवु आदेश मझ पूठिइं पंचाणूं रावन एहवु जि आदेश आविउ छइ । तेणिइं करी जीवनव्य जातइ कालमुख थिया छई ॥ २८ ॥

एकत्र सर्वे सबलं मिलित्वा, हिन्दूकदेशं चलताशु यूयम् ।
गुरोर्निदेशादिति तैः महद्भिर्भूपैः प्रयाणं झटिति प्रदत्तम् ॥२९॥

गुरे स(सा)हि राजानूं वचन सांभली वलतुं कहीउं । तम्हो छन्नूं राय एकठा मिलीनइं हिंदूना देस मोटा छइ ते भणी नइं तम्हो चालु । तिहां तम्यो(म्हो) ते देस लेई समाविइं राज्या पालु । ते वचन सांभली गुरुना वचननी ... चत्ति आणी । सबलाइ एकठा कटक सहित मिलीनइं पीयाणुं दीधुं ॥२९॥

उत्तीर्य सिन्धुं कटकं सुराष्ट्रदेशे समागत्य सुखेन तस्थौ ।
सर्वेऽपि भूपाः सुगुरोश्च सेवां, कुर्वन्ति बद्धाञ्जलयो विनीताः ॥३०॥

तेह साहिनां कटक सिंधुनदी ऊतरीनइं सुराष्ट्रदेश सोरठमाहि आवी रहिया । तिसिइं वर्षा लागु । सगलाइ राय श्रीकालिकसूरिने सेवा करइं । विन्हइं हाथा जा(जो)डीनइं नित्य सेवा करइं विनयवंत हुंता ॥३०॥

वर्षावसाने गुरुणा बभाषे, अवन्तिदेशं चलतेति यूयम् ।
नृपं निगृह्णीत च गर्दभिल्लं, गृह्णीत राज्यं प्रविभज्य शीघ्रम् ॥३१॥

वरसातनइ प्रांति छेहडइ श्रीकालिकसूरे साहनइं कहिउं अवंतीदेस भणी चालउ । तिहां गर्दभिल्ल राजा छइ निग्रह करउ राज्य थकु उच्छेद । पछइ देस वहिचीनइं आपणां आपणां राज्य पालु ॥ ३१॥

अभापि[7] तैः शम्बलमस्ति [8]नो नः, किं कुर्महे कालिकसूरिरेवम् ।
ज्ञात्वा च तेभ्यः शुभचूर्णयोगैः, कृत्वेष्टिकाः स्वर्णमयीर्ददौ सः ॥३२॥

तेह छन्नूं राए कालिकसूरि वीनव्या । अम्हारइ संबल खूटां किसिउं कीजइ । ति वारइं कालिकसूरिइं इटवाह बलतु देखीनइं माह माहि चूर्णसूं किउं । ते चूर्णनइ योगिइं सघलीइ ईट सूनानी थई । छन्नूं रायनइं वहिचीनइ आपी॥३

ढक्कानिनादेन कृतप्रयाणा, नृपाः प्रचेलुर्गुरुलाटदेशम् ।
तद्देशनाथौ बलमित्र-भानुमित्रौ गृहीत्वाऽगुरवन्तिसीमाम् ॥३३॥

छन्नूं राय ढक्का इसिइं नामि वाजित्रनइ निनादिइं पीयाणां कीधां । श्रीकालिकसूरि लाडदेसमाहि थका बलि... भानुमित्र गुरुना भाणेज तेहनइं मिली ते साथिइं लीधा कटकसहित ते हू कटक अनइ साहिनां कटकसहित ... सीमइं पुहता ॥ ३३ ॥

श्रुत्वाऽऽगतांस्तानभितः स्वदेशसीमां समागच्छदवन्तिनाथः ।
परस्परं कुन्तधनुर्लताभिर्युद्धं द्वयोः सैनिकयोर्बभूव ॥३४॥

ते कटक आपणी सीमइं आव्यां सांभली गर्दभिल्ल राजा सबल गज तुरंगम रथ पायक सहित साहमु आविउ परस्परइं भाले खांडे तोमर तीर शल्य वेल शक्तिका मुद्गरने प्रहारे करी अत्यंत अतिहिं झूझ हवां ॥३४॥

---

७ अभाणि तैः P । ८ नो न किं P ।

( ५ )

अथान्यदाऽऽनम्य मुदा जिनेन्द्रं, सीमन्धरं तीर्थकरं सुरेन्द्रः ।
पप्रच्छ सौधर्मपतिर्निगोदविचारणाकर्णनसप्रमोदः ॥६१॥
विभोऽधुनाऽऽस्ते भरतेऽपि कश्चिन्निगोदतत्त्वार्थविदे विपश्चित् ।
जिनेश्वरोऽप्याह स कालिकार्यो, वेविद्यते सर्वविचारवर्यः ॥६२॥
विप्रस्य रूपेण समेत्य शक्रो, वेदं वदन्नात्मनि दम्भवक्रः ।
संप्रश्नयामास निगोदजीवविचारमेवं गुरुरुच्चचार ॥६३॥
एकैकशोऽसंख्यनिगोदभाजां, गोला असंख्या अखिलेऽपि लोके ।
जानीहि चैकैकनिगोदमध्ये, जीवाननन्तानिति सूरिराह ॥६४॥
विज्ञाय पृष्टायुरथामरेन्द्रः, संभापितः स्वीकृतस्वीयरूपः ।
सूरिं नमस्कृत्य तदालयस्य, द्वारं परावर्त्य जगाम धाम ॥६५॥
गीतार्थशिष्यं स्वपदं प्रदाय, समाधिना योऽनशनं विधाय ।
धामाप संघाय चतुर्विधाय, सः कालिकः सूरिवरः शिवाय ॥६६॥
इत्थं कालिकसूरिराजचरितं सम्यक्कथाया मया,
वृद्धाया(द्धेभ्यो?) अवगम्य रम्यमहिमं संक्षेपतो भाषितम् ।
ये कल्पागमवाचने सविजया व्याख्यान्ति वर्षे प्रति,
श्रीमन्तो विबुधव्रजे तिलकतां लब्ध्वा शिवं यान्ति ते ॥६७॥

(शार्दूलविक्रीडितवृत्तम् )

॥ इति श्रीकालिकाचार्यकथानकं समाप्तम् ॥ मंगलमस्तु श्रीसंघस्य ॥छ॥ श्री ॥१॥

# [२३]

## उपाध्यायश्रीसमयसुन्दरगणिविरचिता

# कालिकाचार्यकथा ॥

[ रचनासंवत् १६६६ ]

प्रणम्य श्रीगुरुं गद्य-पद्यवार्ताभिरद्भुतम् ।
कालिकाचार्यसंबन्धं, वक्ष्येऽहं शिष्यहेतवे ॥१॥

अत्र पूर्वं स्थविरावली व्याख्याता, तत्र श्रीकालिकाचार्योऽपि महाप्रभावकः स्थविरो बभूव, तेन संबन्धः कथ्यते—

तत्र कालिकाचार्याः त्रयः स्थविरा जाताः । तन्मध्ये एकः श्रीकालिकाचार्यः श्रीमहावीरदेवनिर्वाणात् सं० ३ वर्षे श्रीश्यामाचार्यनामा श्रीप्रज्ञापनासूत्रकर्ता पूर्वविदां वंशे श्रीसौधर्मस्वामित आरभ्य त्रयोविंशतितमः पुरुषो येन ब्राह्मणीभूतसौधर्मेन्द्राग्रे निगोदविचारः कथितः । अत्र केचिद् वदन्ति—

सिरिवीरजिणंदाओ, तिन्निसए वरिसवीसवोलीणे ।
कालयसूरी जाओ, सक्को पडिवोहिओ जेण ॥२॥

इति गाथादर्शनात् । ३२० वर्षे निगोदविचारकथकः श्रीकालिकाचार्यो जातः । केचिद् वदन्ति—

तिसय-पणवीस इंदो, चउसय-तिपन्न सरस्सई गहिया ।
नवसय-तिनवइ वीरा, चउत्थिए जो कालगायरिया ॥३॥

इति निर्मूलप्रायगाथादर्शनात् ३२५ वर्षे जातः ॥

केचिद् वदन्ति—चतुर्थ्यां पर्युषणापर्वप्रवर्त्तक एव निगोदविचारव्याख्याता, यथाश्रुतं बहुश्रुता विदन्तीति (१) । यस्तु कालिकाचार्यः श्रीवीरनिर्वाणात् सं० ४५३ वर्षे सरस्वतीभ्राता गर्दभिल्लोच्छेदको . . . मातुलो जातः । कुत्रापि तुर्यश्चतुर्थ्यां पर्युषणापर्वप्रवर्त्तकः कालिकाचार्यः स तयोर्मातुलः प्रोक्तोऽस्ति, यद् अस्ति प्रमाणम् (२) । तृतीयस्तु श्रीकालिकाचार्यः श्रीवीरनिर्वाणात् सं०९९३ वर्षे श्रीविक्रमसंवत्सराच्च सं० ५२३ जातः । येन श्रीवीरवाक्यात् पर्युषणापर्व भाद्रपदसुदिपञ्चमीतः चतुर्थ्यामानीतम् (३) । एवं श्रीकालिकाचार्याः त्रयः पृथग् जाताः, परं नामसादृश्याद् द्वयोरभ्रे तयोः कालिकाचार्ययोः एकीभूतैव संलग्ना कथा कथ्यते । अतो अत्र गर्दभिल्लोच्छेदकश्रीकालिकाचार्यसंबन्धः कथ्यते—

अस्मिन् जम्बुद्वीपे भरतक्षेत्रे धारावासं नाम नगरमभूत् । परं तन्नगरं कीदृशमस्ति ? । यस्मिन् नगरे —वङ्गदेश—तिलङ्गदेश—कलिङ्गदेश—वराङ्गदेश—प्रयागदेश—सुयागदेश—मुरुण्डदेश—पुलिन्ददेश—सुरेन्द्रदेश—चित्रकूटदेश—लाटदेश—घाटदेश—नाट्यदेश—विराटदेश—केलिवाटदेश—भाटदेश—वाटदेश—कुण्टदेश—घोडादेश—घाटदेश—मेदपाटदेश—मगधदेश—सोरठदेश—कच्छदेश—गूर्जरदेश—मालवदेश—कासमीरदेश—सुरंतदेश—वदकसांनदेश—बंगालदेश—कोङ्कणदेश—पञ्चमर्तदेश—श्रीराज्यदेश—परतकालदेश—हबसीदेश—

पठाणदेश–जलमानसदेश–मरुस्थलदेश–पञ्चालदेश–सिन्धुदेश–दक्षिणदेश–पूर्वदेश–पश्चिमदेश–उत्तरदेश(५२)-प्रमु॰ नानादेशवास्तव्यव्यवहारिणो विविधवस्तुक्रयाणकानि लात्वा आगत्य च व्यापारं कुर्वन्ति। पुनरिदं नगरं अष्टाविंशद्(२ वकारैः शोभितं वर्त्तते। ते चामी—

वापी-वप्र-विहार-वर्ण-वनिता वाग्मी वनं वाटिका,
वैद्य-ब्राह्मण-वेश्य-वादि-विबुध-वेश्या वणिग् वाहिनी।
विद्या-वीर-विवेक-वित्त-विनयो वाचंयमो वल्लिका,
वस्त्रं वारण-वाजि-वेसर-वरं (२८) चैभिः पुरं शोभितम् ॥४॥

पुनः यस्मिन् नगरे एवंविधा स्थितिः—

यस्यां देवगृहेषु दण्डघटना (१) स्नेहक्षयो दीपके—
ष्वन्तर्जाङ्गुलिकालयं द्विरसना खड्गेषु मुष्टिर्यथा (२–३)।
वादस्तर्कविचारणासु (४) विपणिश्रेणीषु मानस्थितिः (५),
वन्धः कुन्तलवल्लरीषु (६) सततं लोकेषु नो दृश्यते ॥५॥

इत्यादिऋद्धिसमृद्धिसहितं सुरलोकसदृशं [नगरं] ज्ञेयम्।

अथ तस्मिन् धारावासनामनगरे वज्रसिंहनामा राजा राज्यं प्रतिपालयति। परं स राजा कीदृशोऽस्ति?। शूरवी विक्रान्तप्रतापीक–साहसिक–अनेकदेशनायक–न्यायसत्याल्यायक–अमोघसायक–पुरोवासमानपायक-सौम्यमूर्ति–देदीप्यमान स्फूर्ति–अखण्डप्रताप–अमृतसममधुरालाप–साक्षात्कन्दकन्दर्पावतार–याचकजनाधार–दुष्टनिग्राहक-शिष्टजनप्रतिपालक–न्या॰ नीतिप्रधान–सर्वगुणनिधान–सेवकजनवत्सल–हारविराजमानवक्षःस्थल–परनारीसहोदर–रूपपुरन्दर–परदुःखभञ्जन–वाच॰ च्छनिष्कलङ्क–निराकृतातङ्क–गौरवर्ण–लम्बकर्ण-प्रलम्बभुजादण्ड–प्रौढाज्ञाचण्ड–उपराठीरोमराय–सुवर्णकाय–'पाताळनो क॰ नउ लांक, नही कोइ वांक, हृदये श्रीवत्स अत्यन्तस्वच्छ पायपद्म सौभाग्य सम्र, हस्ते चक्र साक्षात् शक्र' एवंविधो रा वज्रसिंहः।

अथ तस्य राज्ञः सुरसुन्दरीति नाम्नी पट्टराज्ञी वर्तते। परं सा कीदृशी अस्ति?।

'सर्व अंतेउरमांहि प्रधान, सर्वगुणनिधान, भर्तारनी भक्त, धर्मनइ विषइ रक्त, राजानइ प्रेमपात्र, सुंदर ॰॰ शीलगुणविभूषित, सर्वथा अदूषित, कमलनेत्र पुण्यक्षेत्र, जेहनी मीठी वाणी सगली जाणी, रूपवंतमांहि वखाणी, घणुं॰ इंद्राणी पिणि जे आगइ आणइ पाणी, वली जेहनइ अंग ओलगू दासीनउ परिवार वर्त्तइ छइ, कुण कुण कस्तूरी कपूरी २, जवाधि ३, मलयागिरी ४, लीलावती ६, पद्मावती ६, चन्द्रावती ७, चंद्राउलि ८, चांपू ९, सांपू १ सरस्वति ११, गोमति १२, गंगाधरी १३, दीवाधरी १४, रामगिरी १५, हंसली १६, बगुली १७, हरिबोली १ प्रमुखाः।'

अथ तस्याः सुरसुन्दर्याः शुभस्वप्नसूचितः कालककुमारः पुत्रो जातः, सरस्वतीनाम्नी एका पुत्री च। परं कुमारः कीदृशोऽस्ति?। महारूपवान् सर्वपुरुषलक्षणशोभितः सर्वजनवल्लभो विशेषतो माता-पित्रोः जीवत्प्राणो ॰॰॰ ग्यवान् मातृ-पितृभिः पाल्यमानश्चन्द्रकलेव वर्धमानोऽष्टवार्षिको जातः। तस्मिन् समये मातृ-पितृभ्यां विचारितम्—

माता वैरी पिता शत्रुः, वालो येन न पाठितः।
न शोभते सभामध्ये, हंसमध्ये बको यथा ॥६॥

पुनरपि—

पुत्रोऽतिमूर्खो विधवा च कन्या, शठं च मित्रं चपलं कलत्रम् ।
विलासकाले च दरिद्रता च, विनाऽग्निना पञ्च दहन्ति देहम् ॥७॥

पुनरपि ज्ञानेन विना मानवः पशुरेव, यतः—

आहार-निद्रा-भय-मैथुनानि, सामान्यमेतत् पशुभिर्नराणाम् ।
ज्ञानं विशेषः खलु मानवानां, ज्ञानेन हीनाः पशवो मनुष्याः ॥८॥

ततः कलाचार्यसमीपे कलाग्रहणार्थं मुक्तः । कुमारोऽपि स्तोककालेन द्वासप्ततिकला(७२) जग्राह । विशेषतोऽश्वपरीक्षायां बाणकलायां च निपुणो जातः । अथ कालिककुमारः सर्वविद्यावान् ... निजभगिन्या सरस्वत्या युक्तः सन् सुखेन कुमारपदवीं भुञ्जन् आस्ते ।

अथान्यदा श्रीवज्रसिंहराजः छत्रं धारयन् चामरैः वीज्यमानः सभामण्डपमागत्य सिंहासने उपविष्टः । तत्र सभा निविष्टाऽस्ति ? । यथा—' अनेकगणनायक दण्डनायक मण्डलीक महामण्डलीक सामन्त महासामान्त च७ मुहता मुग(कु)टवर्धकसंधिपाल दूतपाल सइगरणा वइगरणा देवगरणा यमगरणा संधिविग्रही परविग्रही सेठ सार्थवाह व्यवहारिया अंगरक्षक पुरोहित वृत्तिनायक भारवाहक थईयायत पडुपडियायत टाकटमाली इंद्रजाली मन्त्रवादी तन्त्रवादी यन्त्रवादी धर्मवादी ज्योतिर्वादी धनुर्वादी दण्डधर खड्गधर धनुर्धर छत्रधर चामरधर दीवाधर प्रतीहार खबरदार गजपाल अश्वपाल अङ्गमर्दक आरक्षक साचाबोला कथाबोला गुणबोला समस्याबोला साहि लक्षणबंधक छन्दबंधक अलंकारबंधक नाटकबंधक गीतबंधक ' इत्यादि वर्णकविराजिता ।

तदवसरे राज्ञः खुरसाणदेशादनेके अश्वाः प्राभृते कृते आगताः । परं कीदृशाः सन्ति ? । वर्णतः केऽपि ' पीलडा कंबोजडा रातडा सबजिया अबजिया किवलीया धवलिया किहाडा किरडिया हरणिया मेघवरणिया कालुया हांसला ' लक्षणतोऽपि एवंविधाः—

निर्मांसं मुखमण्डले परिमितं मध्ये लघु कर्णयोः,
स्कन्धे बन्धुरमप्रमाणमुरसि स्निग्धं च रोमोद्गमे ।
पीनं पश्चिमपार्श्वयोः पृथुतरं पृष्ठे प्रधानं जवे,
राजा वाजिनमारुरोह सकलैर्युक्तं प्रशस्तैर्गुणैः ॥९॥

इत्यादि । ततो राज्ञा कालिककुमारस्य कथितम्—अहो कुमार ! बहिर्गत्वा एतेषां तुरङ्गमाणां परीक्षा ... ततः कुमारः तथेति प्रतिपद्य हृष्टः सन् सदृशवयस्कसेवकपञ्चशतीयुतं तरलतरं तुरङ्गममेकमारुह्य क्रीडावने जगाम तद् वनं कीदृशमस्ति ? । ' अंब निम्ब केलि कंकेलि वल्लि कणवीर करीर कुरवक आमलक केतकी केवडा कचनारि कन्हार कउठ कंदूरी करमदा किंशुक क्रकच काकोदुम्बरि कर्कन्धू करञ्ज कपिकच्छू कमल कैरव कुवलय कुरुविन्द करणा वरणा अशोक आंबिली अखोड अगर तगर अरडूसउ अर्जुन अखरोट एरंड उंबर अरणी साग पुन्नाग नारिंग पाडल पारिजात जांबू निंबू जंभीरी नालेरी फोग खेजडा वणसडा ताल तमाल सदाफल नागरवेलि पेठलि जाइ जूही दमणउ मरूयउ मोगरउ मचकुंद चांपउ ' प्रमुखनानाविधवृक्षावलीविराजितम् । तस्मिन् वने अश्ववाहनिकां कृत्वा श्रमातुरः सन् कुमारः सपरिवारः सहकारतरोः छायायां तुरङ्गमादुत्तीर्य विशश्राम ।

तस्मिन् प्रस्तावे तत्र वने अनेकसाधुपरिवारवृताः श्रीगुणाकरसूरयो यथार्थनामानः समवसृताः सन्ति । परं ते क सन्ति ?–' पडिरूवो तेयस्सिणो जुगप्पहाणागमो महुरवक्को गंभीरो धीइमंतो उवएसपरो अपरिस्साविणो ... संगहसीलो अभिग्गहमइणो अविकत्थणो अचवलो पसंतहियया खंतिजुया मद्दवजुया अज्जवजुया मुत्तिजुया तव... संजमपालगा सच्चजुया सोयजुया अकिंचणा बंभचेरवासिणो अणिच्चाइदुवालसभावणाभावगा ' एवं ३६ ... शोभमाना । पुनः कीदृशास्ते ?–' जियकोहा जियमाणा जियमाया जियलोहा जियपरीसहा जियभया जियनिद्दा जि... संसारपारगामिणो परमसंविग्गा संसारभवउव्विग्गा सुयसायरा करुणानिहिणो सव्वजीवसुहेसिणो दीहदंसिणो कु... संपुण्णसुयबला निम्ममा निब्भमा निरहंकारा निव्विकारा मिच्छत्ततिमिरनासगा निरवज्जवासगा समत्तरयणदायगा ... किं बहुना सर्वसाधुगुणसंपूर्णा । तेषां मेघगर्जितगम्भीरव्याख्यानध्वनिं श्रुत्वा कुमारः केकीव हर्षितः सञ्जातविस्मयः अहो ! क ईदृग्मधुरध्वनिना धर्ममाख्याति ?, तत्र गत्वा श्रूयते तदा चारु । ततो जातविवेकातिरेकः समुत्थाय तत्र ... सूरिगुरुं विनयेन नत्वा उचितस्थाने समुपविष्टः । राजपुत्रा विनयं कुर्वन्त्येव, यत उक्तम्—

विनयं राजपुत्रेभ्यः, पण्डितेभ्यः सुभाषितम् ।
अनृतं द्यूतकारेभ्यः, स्त्रीभ्यः शिक्षेत कैतवम् ॥१०॥

अथ च समृद्धः पुमान् विनयं कुर्वन् मृ(मि)ष्टो लगति, यदुक्तम्—

पाई पढइ पढाई वखाणइ रूपवंतनई गाई जाणइ ।
रिद्धिवंतनइ विनय पउट्टइ सक्करिसत्थे घेवर लुट्टइ ॥११॥

ततः श्रीसूरिभिः धर्मोपदेशः प्रारब्धो यथा–अहो कुमार ! इयं राज्यलक्ष्मीः चञ्चला दृश्यते, यदि न त्यज्यते ... आरम्भपापपङ्कमग्नत्वेन दुर्गतौ गम्यते, यदुक्तम्—

गयकन्नचंचलाए, अपरिचत्ताइं रायलच्छीए ।
जीवा सकम्मकलिमलभरियभरा तो पडंति अहे ॥१२॥

पुनरपि बुद्धिमतो मनुष्यस्य बुद्धेः तदेव फलं यत् पुण्यपापादौ तत्त्वविचारणा क्रियते, यत आह—

बुद्धेः फलं तत्त्वविचारणं च, देहस्य सारं व्रतधारणं च ।
अर्थस्य सारं किल पात्रदानं, वाचः फलं प्रीतिकरं नराणाम् ॥१३॥

पुनरपि शरीरादि सर्वमनित्यं ज्ञात्वा विवेकिना दीर्घदर्शिना मनुष्येण धर्मस्यैव संग्रहः कर्त्तव्यः, यत उक्तम्—

अनित्यानि शरीराणि, विभवो नैव शाश्वतः ।
नित्यं संनिहितो मृत्युः, कर्त्तव्यो धर्मसंग्रहः ॥१४॥

तथा धर्मस्यापि पण्डितेन सुवर्णस्येव परीक्षा कार्या । यदवादि—

यथा चतुर्भिः कनकं परीक्ष्यते, निघर्षण-च्छेदन-ताप-ताडनैः ।
तथैव धर्मो विदुषा परीक्ष्यते, श्रुतेन शीलेन तपो-दयागुणैः ॥१५॥

तत्रापि विंशतिविंशोपकदयामयो जरामरणादिच्छेदकः चक्रवर्तितोऽप्यधिकसुखस्वरूपः संसारसमुद्रतारकः अजरामर-शाश्वतसुखदायकः पञ्चमहाव्रतरूपो यतिधर्म एव सर्वधर्मोत्तमः । एवं श्रीगुरुवचनश्रवणात् संसारस्यासारतां ज्ञात्वा संजात-वैराग्यो भाग्यवान् श्रीकालिककुमारः प्रतिबुद्धः सन् करद्वयं संयोज्य विज्ञपयति स्म; हे भगवन् ! हे परोपकारवन् ! भवद्वचनेन अहं प्रतिबुद्धोऽस्मि, अथ यावन्निजगृहे गत्वा माता–पित्रोरनुमतिं लात्वा युष्मत्समीपे नायामि, तावत् श्रीगुरु-

भिरत्रैव वने स्थातव्यम , इति प्रतिज्ञाय स्वगृहे गत्वा माता-पित्रोः उवाच—मया गुरुदेशनया संसारोऽसारो ज्ञातः, दीक्षां लास्यामि, ममादेशं दत्त । ततो माता-पितरौ तद्दुःखेन मोहेन च मूर्च्छामापतुः । पुनः व्यजनादिनातो लब्धचेतनौ एवमूचतुः—रे पुत्र ! त्वं बालोऽसि, यौवनावस्थोऽसि, सुकुमारोऽसि, कामभोगार्होऽसि, अतो राज्यधुराभार करणेन पूरय माता-पित्रोर्मनोरथान् । पुनः परिणतवयस्को दीक्षां गृह्णीयाः, परं सांप्रतं दीक्षाग्रहणं नैव, पुनः ... मार्गोऽतिदुःखकरोऽस्ति, तत्र यावज्जीवं अस्नानता १, भूमिशयनं २, लोचकरणं ३, देहस्याप्रतिकर्मता ४, गुरुकुलव गुरुशिक्षायां स्थातव्यं ५, क्षुधादिद्वाविंशत्परीषहाः सोढव्याः ६, देवाद्युपसर्गे चाक्षोभ्यता ७, लब्धालब्धे समभावना अट्ठार(अष्टादश)सहस्रशीलाङ्गरथधारिता ९, बाहुभ्यां समुद्रतरणं १०, तीक्ष्णखड्गधारोपरि चलनं ११, ... पादाभ्यां विधापयितव्या १२, निःस्वादवालुकायाः कवलभरणं १३, गङ्गाप्रतिस्रोतसा गन्तव्यं १४, तुलायां मेरुः तो तव्यः १५, एकाकिना कर्मारिमहाबलं जेतव्यं १६, राधावेधेन चक्रस्थितपुत्तलिका वेधयितव्या १७, ... गृहीतव्याः १८ इत्यादि । एवं दुष्करतायां दर्शितायमपि कुमारः प्रवर्द्धमानवैराग्यः प्राह—हे माता-पितरौ ! एषा दीक्षायां दुष्करता सा सत्या । तथैव परं कातराणां कापुरुषाणां ज्ञेया, न शूरवीराणां सत्पुरुषाणाम्, ततोऽहमवश्यं द ग्रहीष्यामि, ममादेशं दत्त । या वार्ताकरणेऽपि क्षणवेला याति सा ममायुर्मध्ये त्रुटति, अकृतार्था च याति । ततो पितृभ्यां 'याता म्रियमाणश्च न केनापि रोद्धुं शक्यते ' इति विचार्यानुमतिर्दत्ता । ततः श्रीकालिककुमारेण कृतपि महोत्सवेन महताऽऽडम्बरेण निजसेवकपञ्चशतीसहितेन सहस्रपुरुषवाहिनीं शिबिकामारुह्य ... निर्घोषपूर्वमपूर्वरीत्या वने गत्वा गुरोः समीपे दीक्षां जगृहे । सरस्वत्यपि तद्भगिनी भ्रातृस्नेहातिरेकात् पृष्ठे दीक्षां माता-पितरौ अपि, हे पुत्र ! एषा तव भगिन्यस्ति, अस्या रक्षा बह्वी कार्या, इति शिक्षां दत्त्वा विमनस्कौ .. स्वगृहे गतौ ।

अथ कालिककुमारमुनिः स्तोककालेन सुबुद्धित्वाद् गुरुसेवाप्रसादाद् व्याकरण १– तर्क २– छन्दो ३–ऽलङ्कार ' काव्य ५– नाटक ६– शाटक ७– ज्योतिष् ८– वैद्यक ९– नैमित्तिक १०– मन्त्र ११– तन्त्र १२– यन्त्र १३ अङ्ग १४– उपाङ्ग १५– छेदग्रन्थ–१० पयन्ना–४ मूलसूत्र–नन्दी १– अनुयोगद्वार २– एवं ४५ ... तथा सूत्र-निर्युक्ति-भाष्य-चूर्णि-वृत्ति-प्रकरणादि स्वसमय-परसमयशास्त्रपारगामी जातः । ततो गुरुभिः योग्यतां ... चार्यपदे स्थापितश्च ।

अथ श्रीकालिकाचार्या अनेकसाधुपरिवृता ग्रामानुग्रामं विहरन्तो भव्यजीवान् प्रतिबोधयन्तो मालवकदेशे ... पुर्यां बहिरुद्यानवने समवसृताः । सर्वेऽपि लोका वन्दनार्थं तत्र यान्ति । धर्मं च सदा शृण्वन्ति । सरस्वती साध्वी अनेक साध्वीपरिवारपरिवृता उज्जयिन्यां श्राविकापार्श्वे उपाश्रयं मार्गयित्वा स्थिताऽस्ति ।

अथान्यदा सरस्वती साध्व्यपि निजभ्रातरं कालिकाचार्यं वन्दित्वा यावन्निजोपाश्रयमागच्छति वर्त्मनि ... नगरीस्वामिना गर्दभिल्लेन सा दृष्टा, चिन्तितं च तेन—एषा का ? एतादृशी सरूपा किं देवी वा किं विद्याधरी वा ? किन्नरी वा ? । इति संदेहेन निजपार्श्ववर्तिसेवकाः पृष्टाः । तैरुक्तम्—हे महाराज ! एषा वज्रसिंहराज्ञः पुत्री सरस्वताना कुमारिका सती निजभ्रातृस्नेहातिरेकात् साध्वी जाता । ततो गर्दभिल्लेन विचारितम्—अहो ! अनया तपसा कायः शोषित तथापि सुरूपत्वं न याति, यतः—

' काली तउही कस्तूरी, थोड़ी तउही तेजनतूरी । सूकी तउही वेउल सिरी, तूटी तउही मोती सिरी । .. तउही वराह, तूटउ तउही साह । निवलउ तउही गद, निर्गुण तउही नाह । पूरउ तउही साकर, निवलउ तउही टाकुर

तपाव्यो तउही कांचण, घस्यउ तउही चंदण। लहुडउ तउही सीह, घुंवलउ तउही दीह। नान्ही तउही नागिणी, निरसी तउही सोहागणी'।

ततो यदि एतामितोऽपहृत्य ममान्तःपुरे मुञ्चामि, स्नान-मज्जनादि सम्यगुपचरामि, मनोज्ञाहारादिना पोषयामि, तदा मम स्त्रीरत्नं भविष्यति। एतां विना च मम राज्यश्रीरपि निष्फला, मम जीवितं च वृथा ज्ञेयम्—इत्येवं तां कामग्रहग्रस्तेन गर्दभिल्लेन श्येनेन चटकेव निजसेवकपार्श्वाद् नानाविधं विलपन्तीमुत्पाटयित्वा निजान्तःपुरे क्षिप्ता। विलापस्त्वेवम्—हे बान्धव! हे सुगुरो! हे अनेकगुणप्रधान! हे चतुरबुद्धिनिधान! हे जिनशासननायक! हे भव्यजीवसुखदायक! हे जिनशासनशृङ्गार! हे गच्छाधार! हे आगमस्याकर! हे करुणासागर! हे भ्रातः! हे कालिकाचार्य! गर्दभिल्लेन राज्ञा पापिष्ठेन शीलखण्डनेच्छानिष्ठेन मम सर्वथाऽप्यनिष्टेन मामनाथामिवापहरन्तीं रक्ष रक्ष इति। तदा अन्या अपि साध्व्यः पूत्कारं चक्रुः। लोका अपि हाहाकारं वितेनिरे। ततो महाकोलाहलो जातः। ततः शीघ्रं साध्वीभिः सर्वोऽपि वृत्तान्तः श्रीकालिकाचार्यस्य निवेदितः—भवदीयभगिनी सरस्वती साध्वी गर्दभिल्लेनापहृत्य निजान्तःपुरे क्षिप्ताऽस्ति। न ज्ञायतेऽथ क भविष्यति?।

ततः श्रीकालिकाचार्याः कोपाक्रान्ताः कतिपयशिष्यैः सहिता राजपार्श्वे जग्मुः। सौम्यशीतलन्यायवचनैः प्रोक्तम्—हे राजन्! एषा साध्वी मम भगिनी, तत्रापि शीलवती, तत्रापि पञ्चमहाव्रतधारिणी, एतस्या वैमनस्यकरणे महाकर्मबन्धो भविष्यति। अपि चान्योऽपि नगरमध्ये दुष्टमतिः दुःशीलश्च भविष्यति स तव निवार्यो भविष्यति, परं यदि त्वमेवान्यायं करिष्यसि तदा तव निवारकः को भविता? अपि च यत्र नगरे राजैव चौरोऽन्यायी च तत्र लोका नगरं मुक्त्वा वनमेव भजन्ति। यदुक्तम्—

> यत्रास्ति राजा स्वयमेव चौरो, भाण्डीवहो यत्र पुरोहितश्च।
> वनं भजध्वं ननु नागरा भो!, यतः शरण्याद् भयमत्र जातम् ॥१६॥

इति। पुनः कालिकाचार्यैः प्रोक्तम्—हे राजन्! अन्तःपुरे बह्व्यो रूपवत्यश्चातुर्यकलावत्यो युवत्यो रमणीयाः सन्ति, तासामुपरि संतोषं कुरु, परं माऽनयाऽस्थिमात्रया मलमलिनगात्र्याऽतिजीर्णवस्त्रया साध्व्या समं किं सुखमनुभविष्यसि?। ततो मुञ्चैनां यथा धर्मशालायां गत्वा एषा संयमं पालयिष्यति। एतादृशानि श्रीकालिकाचार्यवचनानि श्रुत्वा गर्दभिल्लो मौनमाधाय श्रुतमप्यश्रुतं कृत्वा स्थितः, समुत्थाय चान्तःपुरे गतः। ततः श्रीकालिकाचार्यैश्चिन्तितम्—अथ कोऽपि नवीन उपायः क्रियते। ततः श्रीकालिकाचार्या उपाश्रयमागत्य सङ्घाग्रे सर्वस्वरूपं प्रोक्तवन्तः। ततः सङ्घेन चिन्तितम्—आचार्यवचनं न मानितम्, परमस्मद्वचनं मानयिष्यति। ततः प्रभूतं प्राभृतं लात्वा सङ्घोऽपि भूपाग्रे गतः। राज्ञा पृष्टम्—कथं भो! महाजनैः समागतम्?, किं कार्यम्?। संघेनोक्तम्—त्वं मालवकदेशस्वामी तवेदृशं कुकर्म कर्तुं न युक्तम्। यतो राजा पितेव प्रजाः प्रतिपालयति, विशेषतो दर्शनिनां तपस्विनां वर्गम्, ततो मुञ्चेमां साध्वीम्, इत्यादि बहुतरं प्रोक्तम्, परं स कुकर्मा कामी राजा न मुञ्चति। ततः संघेन यथागतेन तथाऽऽगतेन श्रीसूरीणां प्रोक्तम्। ततः श्रीकालिकाचार्येण कोपाक्रान्तेन संघाग्रे प्रोक्तम्—अहं समर्थः सन् जिनशासनप्रत्यनीकानां यदि शिक्षां न दद्मि तदा जिनाज्ञाविरोधकत्वेन दुर्गतिकः स्याम्। यदुक्तम्—

> ये प्रत्यनीका जिनशासनस्य, संघस्य ये चाशुभवर्णवाचः।
> उपेक्षकोड्डाहकरा धरायां, तेषामहं यामि गतिं सदैव ॥१७॥

ततः प्रतिज्ञां चक्रे—यदाऽहं गर्दभिल्लं सराज्यं नोन्मूलयामि तदाऽहं न कालिकाचार्यः। ततः स्वगच्छभारं गीतार्थेषु स्थापयित्वा स्वयमग्रथिलोऽपि ग्रथिलीभूय कर्दमादिना गात्रमनुलिम्पन्, नगरमध्ये भ्रमन्, वक्ति—यदि गर्दभिल्लो

राजा तत. किम् ?, यदि तस्य नगरं महत् तर्हि किम् ?, यदि गर्दभिल्लस्य अन्तःपुरस्त्रियो बह्व्यः ततः किम् ?,- यदि राज्ञो भाण्डागार-कोष्ठागार-हस्ति-तुरङ्गम-रथ-पदातयो बहवः ततः किम् ?, यदि राजा प्राज्यं साम्राज्यं भुनक्ति तदा मम किम् ? । इत्येवं प्रलपन्तं प्रतिमार्गं प्रतिगृहं भ्रमन्तं कालिकाचार्यं दृष्ट्वा नगरवासिनो लोकाः सामन्त-श्रेष्ठि–सेनापति–मन्त्रिप्रमुखा एकीभूय राज्ञः समीपे गत्वा एवं प्रोक्तवन्तः–हे राजेन्द्र ! अयं महापुरुष आचार्यो निजभगिनीस्नेहाद् ग्रथिलो जातः ततः कृपां कृत्वा साध्वीं मुञ्च यथाऽयं सज्जो भवति । इत्यादिवचनानि श्रुत्वा कुपितो राजा वक्तुं प्रवृत्तः–रे लोकाः ! यात यात मम दृष्टितः, एवंविधां शिक्षां निजगृहे निजमातृ-पितृ-भ्रातृ-कलत्रादीनां दत्त । ततः सामन्तादयो लोका विलक्षीभूय स्वगृहं जग्मुः । श्रीआचार्यैरपि श्रुतं यत् 'सामन्तादिवचनमपि न मानितम्', अथ यदि तेनाधमेनातितानितं तर्हि त्रुटत्येव, यतः—

अतिताण्युं त्रुटइ, अतिभर्युं फुटइ ।
अतिखाधुं खुटइ, अतिढीली गांठि छूटइ ॥१८॥

तस्मात् किञ्चिद् वैरूप्यं कर्तव्यम् । अत्रापि न स्थातव्यं च, कुत्रापि देशे गत्वा कमप्युपायं करोमि, इति निश्चित्य श्रीकालिकाचार्याः सिन्धुनदीतटे पश्चिमदिशि एकः पार्श्वकूलो देशोऽस्ति, तत्र गताः, तत्र देशे ये राजानस्ते सर्वेऽपि 'साखी' इति कथ्यन्ते । तत्रैकस्य साखीभूपस्य नगरसमीपे महात्मवेषेण गताः । तस्मिन् प्रस्तावे तत्रैका कूपिका वर्तते । तत्पार्श्वतो बहवः कुमारा भ्रमन्तो दृष्टाः, पृष्टं च–भो ! किं विलोक्यते ? । ते प्राहुः–भो परदेशिन् ! अस्माकं रममाणानां मणिमयकन्दुकः कूपिकायां पतितः, प्रवेष्टुं न शक्यते, बहिःस्थितानां च न निस्सरति । ततो वयं विलक्षीभूताः सन्त इतस्ततो भ्रमामः । आचार्या प्राहुः–भो कुमाराः ! गृहाद् धनुर्बाणानानयत यथा कन्दुकं निष्कास्य ददामि । ततस्तैस्तथा कृतम् । तत आचार्यैः आर्द्रछगण-वेष्टन-ज्वलत्तृणक्षेपणपूर्वं धनुराकृष्यैकेन बाणेन कन्दुको विद्धः, द्वितीयेन बाणेन प्रथमो बाणो विद्धः, एवं तृतीयेन द्वितीयः, इत्येवं परम्परया विद्धबाणप्रयोगेन कूपकण्ठस्थितैरेव कन्दुको निष्कास्य कुमाराणां दत्तः । सर्वेऽपि कुमारा हर्षिताः सन्तो विस्मयमादधानाः स्वस्वगृहं गत्वा एवं प्रोचुः–हे तात ! अद्यैकः कोऽपि परदेशी परदेशात् कलावान् समेतोऽस्ति, तेनास्माकं कूपे पतितः कन्दुको निष्कास्य दत्तः । सर्वोऽपि वृत्तान्तः कथितः ।

ततः तत्रत्यसाखीभूपैः निजपुत्रान् मुक्त्वा सादरं स्वगृहे श्रीकालिकाचार्याः समानीताः । ततः सूरिभिराशीर्वादो राज्ञे दत्तो यथा—

चिरं जीव चिरं नन्द, चिरं पालय मेदिनीम् ।
चिरमाश्रित्यलोकानां, प्रपूरय मनोरथान् ॥१९॥

पुनरपि—

पौषमासे निराहारा बह्वाहाराश्च कार्तिके ।
चैत्रमासे गुडाहारा भवन्तु तव शत्रवः ॥२०॥

ततः साखीराजेनापि विद्याकलाचातुर्यचमत्कृतेनातिबहुमानसन्मानादि दत्वा निजपार्श्वे रक्षिताः । विद्यावन्तो हि पूज्यन्ते, यदुक्तम्—

विद्वत्वं च नृपत्वं च, नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा, विद्वान् सर्वत्र पूज्यते ॥२१॥

पुनरपि—

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं,
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं,
विद्या राजसु पूज्यते न हि धनं विद्याविहीनः पशुः ॥२२॥

अपि च विद्यावतां परदेशोऽपि स्वदेशः, यदाह—

कोऽतिभारः समर्थानां, किं दूरे व्यवसायिनाम् ।
को विदेशः सुविद्यानां, कः परः प्रियवादिनाम् ॥२३॥

अथ **का**लिकाचार्यास्तत्र तिष्ठन्ति । प्रत्यहं **सा**खीराजस्य समीपे यान्ति, नानाविधचेतश्चमत्कारकारिज्योतिर्निमितादिविद्यया राज्ञश्चित्तं रञ्जयति । राजापि अत्यन्तहृष्टतुष्टमनस्को गुरूणामतिबहुमानं दत्ते । एवं च सति गतानि कियन्ति दिनानि । तदवसरे एकदा एको दूत एकं कचोलकं छुरिकासहितं लेखं चाग्रे मुक्त्वा राज्ञः प्रणम्य सन्मुखं स्थितः । ततः **सा**खीराजो लेखं वचायित्वा तद् विलोक्य च श्याममुखो बभूव । ततः श्री**का**लिकाचार्यैरुक्तम्—भवतां स्वामिप्राभृतं समागतम्, तत्र हर्षो विलोक्येत, ततो हर्षस्थाने विषादः कथम्? । राजा प्राह—अहो महापुरुष ! अद्यास्माकं मरणरूपं महाभयं जातम् । मरणादप्यधिकं भयं किमपि नास्ति, यतः—

पंथसमा नत्थि जरा, दारिद्दसमो पराभवो नत्थि ।
मरणसमं नत्थि भयं, खुहासमा वेयणा नत्थि ॥२४॥

ततः सूरिभिः पृष्टम्—किं तद् भयम्? । राजा प्राह—हे भगवन् ! योऽस्माकं क्रुद्धः स्वामी स **सा**हानुसाही वर्त्तते, तेन कुपितेन लिखितं वर्त्तते, 'यदुतानया छुरिकया निजमस्तकं छित्वाऽस्मिन् कचोलके क्षिप्त्वा शीघ्रं मोच्यम्, नोचेत् तव सकुटुम्बस्य क्षयो भावी'। यथा मम तथाऽन्येषामपि मम तुल्यानां ९५पञ्चनवति**सा**खीराजानां दूतो मुक्तोऽस्ति । अतो महाभयम् । किं क्रियते ?, कुत्र गम्यते ?, कथं छुटयते? । ततः श्री**का**लिकाचार्यैः विचारितम्—अयमवसरः, मम च कार्यम् । ततः **सा**खीराजाय प्रोक्तम्—हे राजन् ! मा म्रियस्व, मा चिन्तां कुरु, जीवन् नरो भद्रशतानि पश्यति । यथा दृष्टान्तः—

भानुश्च मन्त्री दयिता सरस्वती, मृतिं गता सा नृपकैतवेन ।
गङ्गातटस्थां पुनरेव लेभे, जीवन् नरो भद्रशतानि पश्येत् ॥२५॥

अत्र समये सति दृष्टान्तो वाच्यः । ततः पञ्चनवति**सा**खीराजानः भवान् च सर्वेऽपि एकीभूय मया सार्धं चलन्तु । यथा **हि**न्दुकदेशे गत्वा **गर्द**भिल्लनृपमुच्छेद्य**उ**ज्जयिनीराज्यं विभज्य भवतां समर्प्यते । ततः सूरिवचने प्रतीतिं कृत्वा लेखप्रेषणपूर्वं सर्वान् ९५ राज्ञ आहूयैकत्र मिलित्वा प्रयाणढक्कां दापयित्वा सर्वेऽपि ९६**सा**खीराजानः श्री**का**लिकाचार्यसहिताश्चलिताः, अग्रे गच्छन्तः **सि**न्धुनदीमुत्तीर्य, **सौ**राष्ट्रदेशमध्ये सुखेन समागताः । तदवसरे वर्षाकालः प्रादुर्बभूव । स कीदृशः ?—

"आयो वर्षाकाल चिहुं दिसि घटा उमटी ततकाल । गडडाट मेह गाजइ, जाणे नालिगोला वाजइ । कालइ आभइ वीजलि झबकइ, विरहणीना हीया द्रबकइ, पपीहा बोलइ वाणिया धान वेचवा वखार खोलइ, बोलइ मोर, दादुर करइ सोर, अंधार घोर पइसइ चोर । कंदर्प करइ जोर, मानिनी स्त्रीभर्त्तारनइ करइ निहोर, चंद्रसूरिज वादले छाया, पंथिजन

आप आपणा घरनइ धाया। राजहंस मानसरोवर भणी चाल्या, लोके वस्तुवाना वखारमइ घाल्या। बगपंगति सोहइ, इंद्रधनुष चित्त मोहइ। आभ थयो रातउ, मेह थयो मातउ। मोटी छांट आवइ, लोकानइ मन भावइ। झडी लागी करसणीरी भाग्यदसा जागी। मूसलधारइ मेह वरसइ, पृथिवी ऊर्णपूर्ण करिवानइ तरसइ। वहइ प्रणाल, खलखलइ खाल, चूयइ ओरा, भीजइ वस्तुवाना बोरा। टबकइ परसाल, चिंचूयइ वाल। नदी आवी पूर कडणिरा रुंख भांजी करइ चकचूर वहइ वाहला, लोक थया काहला। जूना ढूंढा पडइ, लोक ऊंचा चडइ। हालीए खेत्र खड्या, वाडिसुं सेढा जड्या। मारग भागा, जे जिहां ते तिहां रहिवा लागा। प्रगट्या राता ममोला, धान थया सुंहगा मोला, नीली हरी डहडही, घणा हूया दूधनइ दही। नीपना घणा धान, सांभर्या धर्म नइ ध्यान। गयउ रोर, लोक करइ वकोर, गयउ दुकाल, आयउ दंदू सुकाल" ॥

ईदृशे वर्षाकाले न कोऽपि गन्तुं शक्नोति। ततः श्रीकालिकाचार्यवचसा सर्वेऽपि साखीराजानः ९६ निजनिज-पटकुटीं विस्तार्य स्थित्वा(ताः)। एवं मासचतुष्टयस्थित्या वर्षाकाले श्रीकालिकाचार्यैः प्रोक्तम्—भो राजानः! मार्गाः समीचीना जाताः, अथाग्रे चलन्तु यथा भवतां स्वेप्सितं सिद्ध्यति। तदा ते प्रोचुः—हे श्रीगुरो! कथं प्रस्थितिः भवति? बहुकालविलम्बनेनास्माकं द्रव्यं सर्वं निष्ठितम्; शम्बलं च क्षीणम्, क्षुधातुराणामस्माकं सर्वं विस्मृतम्।

"तां वोजा नइ खाण, जां जिमइ जासक धान, तां भट्टारक भगवान, जां जीमइ जासक धान,
तां गीत नइ गान, जां जीमइ जासक धान, तां तान नइ मान, जां जीमइ जासक धान,
तां वीवाह नइ जान, जां जीमइ जासक धान, तां फोफल नइ पान, जां जीमइ जासक धान,
तां धर्म नइ ध्यान, जां जीमइ जासक धान, तां तप नइ उपधान, जां जीमइ जासक धान,
तां आदर नइ मान, जां जीमइ जासक धान, तां लग सखा कान, जां जीमइ जासक धान,
तां लग मुहडइ वान, जां जीमइ जासक धान, जां पेट न पडइ रोटीयां,
तां सव्वेहि गल्लां खोटीयां" ॥२६॥

ततः श्रीआचार्यैः विचारितम्—सत्यमेते वदन्ति। कोऽपि द्रव्योपायः कार्यः यथा संबल भवति। सैन्यं चलति, कार्यसिद्धिर्भवति, परं किं कर्त्तव्यमिति चिन्तया निशि निद्रा न (ना)याति। तावत् शासनदेवता प्रगटीभूय प्रोवाच—हे भगवन्! चिन्ता मा क्रियताम्, एषा चूर्णकुम्पिका गृह्यतां यदुपरि वासः करिष्यते तत् सर्वं स्वर्णं भावि, इत्युक्त्वा गता। प्रभाते जाते श्रीसूरिभिः सर्वेऽपि राजान आहूताः, प्रोक्तं च—भो! कुत्रापि एक इष्टवाहको विलोक्यताम्। तैरासन्नस्थाने विलोकयद्भिः दृष्टः, गुरूणां दर्शितश्च। गुरुभिः विद्याबलेन देवेनादत्तचूर्णवासक्षेपप्रक्षेपणेन च सर्वोऽपीष्टवाहः स्वर्णीकृतः, पश्चाद् विभज्य सर्वेषां साखीराज्ञां प्रत्येकं स्वर्णेष्टिका दत्ता। ततो हर्षिताः संजातसंबलबलाः ते प्रयाणढक्कां दत्वा मालवक-देशं प्रति प्रचेलुः। अग्रे गच्छद्भिः लाटदेशस्वामिनौ श्रीआचार्यभागिनेयौ बलमित्र—भानुराजौ अपि सार्थे गृहीतौ। ततो यावता श्रीकालिकाचार्यसैन्यं मालवकसीम्नि आगतं तावता गर्दभिल्लोऽपि राजा स्वसैन्यं मेलयित्वा प्रयाणढक्कां दापयित्वा सम्मुखमागत्य पतितः। अथ आदित्यवारे द्वयोरपि सैन्यं प्रयाणढक्कावादनपूर्वं च सम्मुखं चलितम्। तत्र केन प्रकारेण युद्धं जातं तत् श्रूयताम्—

"साम्हा साम्हा कटक आव्या चढी, फोजइ फोज अडी। बगतर नइ जीन साल, सुभटे पहिर्या तत्काल। माथइ घर्या टोप, सुभट चड्या सबल कोप, पांचे हथियार बांध्या, तीर तीर सांध्या, अमल पाणि कीधा, भाजगरा मुंस लीधा। घोडे घाली पाखर, जाणे आडा आया भाखर, आगइ कीया गज उपरि फरहरइ धज, हमामे दीधी घाई, सूरवीर आया धाई, रणतूर वागइ, ते पिणि सिंधू [मइ] डाग गइ। ठाकुर वपु फारइ, वडवडा बापांग बिरुद संभारइ। छूटइ नालि निपट

थोडी विचाली, वहइ गोला लोक ल्यइ ओला, छूटइ कुहक वांण, कायरांरा पडइ प्राण, काबिली मीर नांखई तीर, मारइ भालारां बिच्चाविचि लागइ, बगतर भेदीनइ विच्चाविच्चि लागइ, खडगांरी खडाखडि वागी, भडाभडी गर्दभिल्लरी फोज भागी, सबल लीक लागी। हूंतउ जे सेनानी ते तउ धुरथी थयो कानी, जे हूंतउ कोटवाल ते तउ नासउ ततकाल, जे हूंतउ फोजदार तिणरइ माथे पडी मार, जे हूंता वागिया ते पिण भाजी(गी) गया अभागिया, जे हूंता मुहता ते नासी घरे पहुता, जे हूंता चउरासीया तीए दांते त्री(तृ)णां लीया, जे हूंता खवास तीए मूकी जीवारी आस, जे हूंता कायर, तिणनइ सांभरइ आपणी बायर। जे चडता वाहर ते हथियार छोडी थया काहर, जे ढोलरइ ढमकइ मिलता ते गया पासइ टलता, जे बांधता मोटी पाघडी ते ऊभा न रह्या एका घडी, जे हूंता एकएकडा तिणरे नाम दिया वेकडा, जे माथइ धरता आंकडा ते मुहडा कीया वांकडा, जे वणा(जा)वता सारंगी वांकी, तीए तउ रणभूमिका पण पाकी, जे बांधता विहूं पासे कटारी, तीयांनइ नासतां भूमि भारी, जे पहिरता लांवा साडा तीए नासिते कोडि कीया पवाडा। गर्दभिल्ल नाठउ, बोल घणउ माठउ, गढमहि जई पइठउ, चिंता करइ बैठउ, पोलि ताला जडया, कालिकाचार्यना कटक चहुं दीसी विटी पडया ॥

अथ उज्जयिनीनगरीमध्ये गर्दभिल्लो, बहिस्थात् श्रीकालिकाचार्यसैन्यम्—एवं कतिचिद् दिनेषु गतेषु साखीराजस्य सुभटा दुर्गस्य चतुर्दिक्षु भ्रमन्तो विलोकयन्ति परं दुर्गशीर्षोपरि तदीयं सुभटमात्रं न पश्यन्ति। ततस्तैरागत्य श्रीकालिकाचार्याणां विज्ञप्तम्—हे भगवन्! अद्य दुर्गोपरि न कोऽपि सुभटो दृश्यते, न कोऽपि युद्धयति च, तत् कथम्?। तेन ततः कालिकाचार्यैः सूपयोगं दत्वा, ज्ञात्वा च तेषां प्रोक्तम्—भो! अद्य कृष्णाष्टमी वर्त्तते, तेन गर्दभिल्लो गर्दभीं विद्यां साधयन्नस्ति। यूयं पश्यत, यदि कुत्रापि दुर्गोपरि बहिर्मुखा गर्दभी स्थिता भवति, तदा सत्यम्। तैः विलोकयद्भिः सा तथैव दृष्टा। तत आगत्य प्रोक्तं च—हे भगवन्! भवतां वचनं सत्यं जातम्, अस्माभिः सा तथैव दृष्टा। ततो गुरुभिः प्रोक्तम्—शृण्वन्तु एतत्परमार्थम्, एषा विद्या संपूर्णा सिद्धा भविष्यति तदा सा गर्दभी शब्दं करिष्यति, तच्छब्दं ये शत्रवः श्रोष्यन्ते, ते मुखाद् रुधिरं वमन्तो भूमौ पतिष्यन्ति मरिष्यन्ति वा। एतां वार्त्तां श्रुत्वा साखीराट्प्रमुखा भयभ्रान्ता विज्ञपयन्ति स्म—हे भगवन्? कोऽप्युपायः कर्त्तव्यः येन तद्विद्या न प्रभवति। ततः श्रीकालिकाचार्यैः प्रोक्तम्—सर्वमपि निजसैन्यं कोशपञ्चकं दूरे स्थापयन्तु, मम च पार्श्वे शब्दवेधिसुभटानामष्टोत्तरशतं सावधानीभूय तिष्ठतु। यदा चैषा रासभी शब्दकरणाय मुखं प्रसारयति तदा समकालमष्टोत्तरशतबाणैस्तूणीरवत् तस्या मुखं पूरणीयम्, यथा सा शब्दं कर्तुं न शक्नोति, विद्या च न प्रभवति। ततो गुरुवचः प्रमाणयद्भिस्तैस्तथैव चक्रे। उच्चस्थाने स्थित्वाऽऽकर्णान्तबाणानाकृष्य शब्दकरणसमये तस्या मुखं पूरितम्। ततः सा रुष्टा सती गर्दभिल्लमस्तके विष्ठां कृत्वा लत्तां दत्वाऽऽकाशे उत्पत्य गता। ततो सुभटाश्च प्रतोलीं भङ्क्त्वा मध्ये गत्वा गर्दभिल्लं वामबाहुभ्यां बद्ध्वा श्रीकालिकाचार्याग्रे मुक्तवन्तः सोऽप्यधमो नीचैर्भूमौ वीक्षते स्म। ततो गुरुभिः प्रोचे—रे दुष्ट! पापिष्ठ! निकृष्टबुद्धे! किं ते कुकर्माचरितम्?। दुरात्मन्! महासतीशीलचरित्रभङ्गपापद्रुमस्येदमिहास्ति पुष्पम्, परं फलं तु परत्र नरकादिदुःखं प्राप्स्यसि। अरे वराक! अद्यापि किमपि विनष्टं नास्ति, सर्वपापक्षयकरं चारित्रं गृहाण, यथा सुखी भविष्यसि, इत्यादि बहव उपदेशाः सूरिभिर्दत्ताः, परं पापात्मा न प्रतिबुद्ध्यते, यतः—

उवएससहस्सेहि वि, बोहिज्जंतो न बुज्झइ कोई।
जह बंभदत्तराया, उदायिनिव मारउ चेव ॥२७॥

अथवा काको धौतो दुग्धेनापि धवलतां न प्राप्नोति, अथवा मुद्गशैलः पुष्करावर्त्तमेघप्लावितोऽपि नार्द्रीभवति, अथवोषरक्षेत्रे उप्तान्यपि बीजानि नोद्गच्छन्ति, अथवा कूर्मकायः प्रहारशतैरपि न भेत्तुं शक्यते, अथवा बधिरस्य ग्रन्थकोटिश्रवणेऽपि नाववोधो जायते, अथवा विषममृतमिश्रितमपि न मृष्टं भवति, अथवा लशुनं कर्पूरवासितमपि न सुगन्धं स्यात्,

चन्ध्याया वा बहूपचारैरपि न संतानप्राप्तिः, खलो वा सत्क्रियमाणोऽपि न मैत्रीभावं भजते। एवं गर्दभिल्लो गुरुकर्मत्वाद् प्रतिबोध्यमानोऽपि न धर्मं धत्ते स्म। ततो भूपैः मार्यमाणोऽपि गुरुभिः कृपया देशत्यागं कारितः।

ततः कालिकाचार्या यस्य गृहे उषिता आसन् तस्योज्जयिनीराज्यं दत्तम्। अन्येषां च ९५ मालवकदेशो विभज्य यथार्हं दत्तः। ततः सरस्वतीसाध्वी अपि आलोचनां दत्वा तपः कारयित्वा गच्छमध्ये आनीता स्वयमपि कालिकाचार्याः स्वारम्भपापमालोच्य निरतिचाराः सन्तः स्वगच्छभारं बिभराम्बभूवुः। न च करणेन तेषां विराधकत्वम्। यत उक्तं सिद्धान्ते—

संघाइयाण कज्जे, चुण्णिज्जा चक्कवट्टिसिन्नं पि।
कुविओ मुणी महप्पा, पुलाइलद्धीइ संपन्नो ॥२८॥

अथवा विष्णुकुमारेणापि साधुप्रत्यनीको नमुचिः हतः(१)। अपि चाचार्यरक्षां कुर्वद्भिः साधुभिः यामचतुष्टये चत्वारः सिंहा व्यापादिताः (२)। अथवा साधुभिः परस्परं क्रियमाणमत्स्योत्पत्त्याम्नायवार्तां प्रभूतमत्स्योत्पादकं मासिकं वैक्रियसिंहेन हतवन्तः साधवः (३)। पुनरपि आगामिभवे सुमङ्गलसाधुः विमलवाहनं सवाहनं भस्मसात् करिष्यति मोक्षं च यास्यति (४)—इत्यादयो बहवो दृष्टान्ता वाच्याः, इति प्रत्यनीकोच्छेदनेन महाप्रभावकाः श्रीकालिकाचार्याः संजाताः॥

( २ )

अथ तस्मिन्नवसरे भृगुकच्छनगरे श्रीकालिकाचार्यभागिनेयौ बलमित्र–भानुमित्रराजौ स्तः। ताभ्यां मुक्त्वा श्रीगुरूणामेवं विज्ञप्तम्—हे भगवन्! श्रीमद्भिः कृपां कृत्वाऽत्र समागम्यताम्, बहुजीवप्रतिबोधेन महान् भविष्यति। ततः श्रीपूज्या विज्ञप्तिमवधार्य लाभं च विभाव्य, ग्रामानुग्रामं विहरन्तो भृगुकच्छनगराभ्यर्णे समाजग्मुः बलमित्र–भानुमित्राभ्यामपि सम्मुखमागत्य महताऽऽडम्बरेण प्रवेशोत्सवं कृत्वा धर्मशालायामुत्तारिताः। अथ राजा जैनधर्ममर्माणि शृणोति, हृष्टः सन् मध्येसभायां जिनधर्मं प्रशंसति, वक्ति च—अहो! अद्य काले बहवो धर्माः सन्ति, हिंसादिदोपदुष्टत्वात् पाखण्डरूपाः, परं जिनधर्मसमानो न कोऽपि दयामयो धर्मः—इत्यादि जिनधर्मप्रशंसां श्रुत्वा पुरो मस्तके शूलमुत्थितम्, विचारितं चानेन—अहो! राजा मा जैनधर्मी भवतु, तथा च सति मम वृत्तिभङ्गो भविष्यति। वादं कृत्वा [एनं] मानभ्रष्टं करोमि—इति सभासमक्षं वादे कृते गुरुभिः जीवादितत्त्वप्रश्नोत्तरैः निरुत्तरीकृतः। जानाति—कथमप्ययमाचार्य इतो विहृत्यान्यत्र याति तदुपायं करोमि—इति विचार्य राज्ञोऽग्रे प्रोवाच—हे राजन्! एते महान्तो गुरवः एतेषामरसविरसाद्याहारो न देयः, यतः पापं लगति। ततः श्रावकानाहूय प्रच्छन्नं वाच्यम्, यदुत क्षीर–खाण्ड–घृत–मोदक–घृत–पूर–कुण्डलाकृतिप्रमृतिमिष्टान्नपानाहारो देयः। यद् विलोक्यते (युज्यते) तद् मम ग्राह्यम्। ततो राज्ञाऽपि परमभक्तेन तथैव कारितम्।

अथान्यदा यतयो गोचरीं गच्छन्ति तदा प्रतिगृहं श्रावका मृष्टान्नपानैः प्रतिलाभयन्ति। एकदा गोचरीगतान् प्रति बालकाः प्रोचुः—भो यतयः! यूयं वरमिहागताः, चिरं च स्थातव्यम्, भवदर्थं क्रियमाणमृष्टान्नपानेनास्माकमपि मृष्टं जायते। अथ श्रीगुरुभिरपि उपयोगो दत्तः, सांप्रतं कथं श्रावका विशेषपर्वं विनाऽपि मृष्टान्नपानादि प्रयच्छन्ति! ततो ज्ञातं जैनद्वेपिणा पुरोहितेनैषाऽनेषणा व्यधायि। ततः "संकिलेसकरं ठाणं दूरओ परिवज्जए" इति भृगुकच्छपुराद् विहृत्यान्यत्र देशेषु संयमं प्रतिपालयन्ति स्म। अत्रैकस्यां संस्कृतकथायां "मगहेसु" [ अस्मिन्नेव ५२ पृष्ठे श्रीधर्मघोषसूरिकृतायां पञ्चमी ]कथायां च बलमित्र–भानुमित्रयोः सम्बन्ध एवम्—उज्जयिन्यां

भानुमित्रराजानौ बभूवतुः । तदाग्रहात् श्रीकालिकाचार्याश्चतुर्मास्यां तत्र तस्थुः । तत्र च स्वभगिन्याः पुत्र्याः पुत्रं तज्जो भागिनेयं च बलभानुनामानं तयोरनुमतिं विनाऽपि प्राव्राजयामासुः । ततो बलमित्र-भानुमित्रादयो विमनस्का जाताः । अग्रे सम्बन्धः सदृश एव, परं तत्त्वं तत्त्वविदो विदन्तीति-इत्युक्ता एके श्रीकालिकाचार्याः ॥

( ३ )

अथ ये श्रीकालिकाचार्याः श्रीवीरनिर्वाणात् ९९३ वर्षे जातास्ते विहरन्तो दक्षिणदेशे प्रतिष्ठानपुरे जग्मुः । तत्र शालिवाहननामा राजा जैनः परमश्रावको यतिभक्तो राज्यं करोति । गुर्वागमनं श्रुत्वा हृष्टः सन् गुरोः समीपे गत्वा वन्दित्वाऽत्याग्रहं कृत्वा गुरवश्चतुर्मास्यां स्थापिताः । अथ राजा सदा धर्मोपदेशं शृणोति, गुरुभक्तिं च करोति, देवगृहेषु स्नात्रमहोत्वाः क्रियन्ते । एवं च सति श्रीपर्युषणापर्वक्यासन्नं समागतम्, तदा राज्ञा पृष्टम्-हे भगवन् ! श्रीपर्युषणापर्व कदा भावि ? । तदा गुरुभिः प्रोचे-भाद्रपदसुदिपञ्चम्यां भविष्यति । तदा राजा प्राह-हे स्वामिन् ! पञ्चम्यामस्माकं कुलक्रमागतः इन्द्रमहोत्सवः, स त्ववश्यं कर्त्तव्य एव । एकस्मिन् दिने तु पर्वद्वयं कर्तुं न शक्यते, परस्परं भिन्नाचारत्वात् । ततः प्रसादं कृत्वा श्रीपर्युषणापर्व षष्ठ्यां क्रियते । तथा पूजास्नात्र-पौषधादीनि धर्मकृत्यादीनि प्रभूतानि भवन्ति । ततो गुरुभिः प्रोचे-हे राजेन्द्र ! पञ्चमीरात्रिमुल्लङ्घ्य न कदापि पर्युषणा भवति । यदुक्तम्—

अवि चलइ मेरुचूला, सूरो वा उग्गमेइ अवराए ।
न य पंचमीइ रयणिं, पज्जोसवणा अइक्कमइ ॥२९॥

कल्पसूत्रेऽपि—

"नो से कप्पइ तं रयणिं उवाइणावित्तए"

ततो राज्ञा प्रोक्तम्-हे पूज्य ! तर्हि चतुर्थ्यां क्रियताम् । ततः श्रीकालिकाचार्यैः—"अंतरा वि य से कप्पइ"—इति श्रीकल्पसूत्राक्षरदर्शनेन सातवाहनराजाग्रहाच्च पञ्चमीतश्चतुर्थ्यां पर्युषणापर्व प्रवर्तितम् । तद्दर्शेन च चतुर्मासिकं चतुर्दश्यां जातम्, अन्यथाऽऽगमोक्तं पञ्चदश्यामासीत् । तदानीं तेन समस्तसंघेनापि प्रमाणीकृतम् । यदुक्तं तीर्थोद्गालिप्रकीर्णके—

तेणउ य नवसएहिं, समइक्कंतेहिं वद्धमाणाओ ।
पज्जोसवणचउत्थी, कालिगसूरीहिं तो ठविया ॥३०॥
वीसहिं दिणेहिं कप्पो, पंचगहाणी य कप्पठवणा य ।
नवसयतेणउएहिं, वुच्छिन्ना संघआणाए ॥३१॥
सालाहणेण रन्ना, संघाएसेण कारिओ भयवं ।
पज्जोसवणचउत्थी, चाउम्मासं चउद्दसिए ॥३२॥
चउमासपडिक्कमणं, पक्खियादिवसम्मि चउविहो संघो ।
नवसयतेणउएहिं, आयरणं तं पमाणंति ॥३३॥

पुनरपि स्थानाङ्गवृत्तौ—"एवं च कारणेणं अज्जकालगायरिएहिं चउत्थीए पज्जोसवणं पवत्तियं समत्त-संघेण-य अणुमन्नियं, तव्वसेण य पक्खियाई वि चउद्दसीए आयरियाणि, अन्नहा आगमुत्ताणि पुण्णिमाए त्ति"। न च तस्मिन्नेव वर्षे सातवाहनजीवनावधि वा तत् पर्युषणापर्व चतुर्थ्यां कृतम्, पश्चात् पुनरपि पञ्चम्यामेवाभवदिति वाच्यम् । "इयाणिं कहं च अपव्वे चउत्थी पज्जोसविज्जइ" इति शिष्यपृच्छायां गुरुवचनावसरे "एवं च जुगप्प-हाणेहिं चउत्थी कारणे पवत्तिया सा चेव अणुमया सव्वसाहूणं" इति श्रीकालिकाचार्यानन्तरं पश्चात्कालभावि

निशीथचूर्णिकारोक्तदशमोद्देशकचूर्णिवचनाद् भाद्रपदसुदिचतुर्थ्यामेव पश्चादपि श्रीपर्युषणापर्वाभूत् । तत्परम्परया च सांप्रतमपि चतुर्थ्यां क्रियमाणमस्ति–इति सम्यक् समाधानम् ॥

( ४ )

अथ श्रीकालिकाचार्याः सुखेन संयमं पालयन्तस्तत्र तिष्ठन्ति, परं कालवशेन शिष्याः प्रमादिनो जाताः । गुरुभिः बहुप्रेरिता अपि गलितगाव इव न क्रियानुष्ठानादिकं कुर्वन्ति । ततः श्रीकालिकाचार्याः शय्यातरश्रावकस्य सर्वां वार्तां कथयित्वा शिष्यान् सुप्तानेव मुक्त्वा स्वयमेकाकिन एव स्वर्णपुरे नगरे सागरचन्द्राचार्यस्य निजपौत्रस्य प्रशिष्यस्योपाश्रये गत्वैकदेशं मार्गयित्वा तस्थुः । परं न केनापि उपलक्षिताः । प्रभाते सागरचन्द्रेण समाप्ततो विशेषतो नानारागालापेन मधुरध्वनिना महताऽऽडम्बरेण व्याख्यानं कृत्वा पृष्टम्–अहो वृद्ध ! कथय मया कीदृशं समारञ्जनं(कं) व्याख्यानं कृतम् ? । ततः कालिकाचार्यैः प्रोक्तम्–भव्यं कृतम् । ततः सागरचन्द्रेण साहङ्कारेण प्रोक्तम्–अहो वृद्ध ! तव कोऽपि सिद्धान्ते यदि संदेहो भवेत् तदा पृच्छ । तदा कालिकाचार्यैः प्रोक्तम्–धर्म श्रद्दधानैरपि तद्गर्वोत्तारणार्थम्–धर्मोऽस्ति किं वा नास्ति –[इति पृष्टम्] । तेनोक्तम्–धर्मोऽस्ति । कालिकाचार्यैः प्रोक्तम्–धर्मो नास्ति । अत्र द्वयोरपि महान् तर्कवादो जातः । धर्मस्थानपनोत्थापनयोरनेकशो युक्तयः सन्ति, ताः तार्किकैः स्वयं वाच्याः । मया ग्रन्थगौरवभिया न लिखिताः । [ अत्र स्थाने बृहत्खरतरगच्छीयसाधुभिः परस्परं तर्कवादो विधीयते, कृते श्रुते च तस्मिन् वर्षं यावत् परमश्रेयो भवति, इति प्रवर्त्तमानपरम्परा दृश्यते ] । तथाकृते वादे श्रीकालिकाचार्यैः सागरचन्द्रो जितः । ततस्तेन ज्ञातम्–नायं वृद्धः सामान्यः, किन्तु कोऽपि सातिशयी वर्त्तते ।

इतश्च पृष्ठतः प्रमादिनः शिष्याः दिनोदये सुप्तोत्थिताः स्वगुरुमपश्यन्तो विलक्षणाः सन्तः परस्परं पृच्छन्ति । तदवसरे शय्यातरश्रावकेणोक्तम्–रे कुशिष्याः यूयं गुरुशुद्धिमपि न जानीथ ? तदात्याग्रहेण पृष्टेन शय्यातरश्रावकेण प्रोक्तम्–गुरवः सागरचन्द्रपार्श्वे स्वर्णपुर्यां गताः । ततः सर्वेऽपि शिष्याः संघाटकत्रयं कृत्वा स्वर्णपुरं प्रतिचलिताः, पथि लोकाः पृच्छन्ति–। क श्रीकालिकाचार्याः ?। पृष्ठगा वदन्ति–अग्रे, अग्रगा वदन्ति–पृष्ठे समागच्छन्ति । एवं ते तत्र प्राप्ताः । सागरचन्द्रोऽपि गुर्वागमं श्रुत्वा सम्मुखं चलितः, पृष्टं च–क गुरवः ? । तैरुक्तम्–ते तु तव पार्श्वे पूर्वमागताः सन्ति । ततो ज्ञातम्–हुं ते एव । ततः सर्वशिष्यैः सागरचन्द्रेण तत्रागत्य वन्दिताः क्षामिताश्च । अत्र सर्वेऽपि सुखेन संयमं पालयन्तस्तिष्ठन्ति ॥

( ५ )

अथ तदवसरे श्रीसीमन्धरस्वामिपार्श्वे गत्वा निगोदविचारान् श्रुत्वा प्रोवाच–हे स्वामिन् ! एतादृशं निगोदविचारं कोऽपि भरतक्षेत्रे जानाति ? । भगवता प्रोक्तम्–भरतक्षेत्रे प्रतिष्ठानपुरे कालिकाचार्यः । तत इन्द्रो ब्राह्मणरूपं कृत्वाऽऽगत्य पृच्छति स्म–हे भगवन् ! निगोदविचारं वदत । गुरुभिः प्रोक्तम्––

गोला य असंखिज्जा, असंखनिग्गोयओ हवइ गोलो ।
इक्किक्कम्मि निगोए, अणंतजीवा मुणेयव्वा ॥२४॥

इत्यादिसूक्ष्मविचारगहनं श्रुत्वेन्द्रो हर्षं प्राप्य हस्तं दर्शितवान्–हे भगवन् ! ममायुः कियदस्ति ? । स्तोकं स्यात् तदा मरणं साधयामि । ततो गुरुभिः विलोकितम्–वर्षशतात् सहस्राल्लक्षात् कोटितोऽप्यधिकम् । ततो सागरोपमस्वरूपं दृष्ट्वा उक्तम्–हे इन्द्र ! धर्मलाभोऽस्तु । तत इन्द्रः प्रकटीभूय दशदिश उद्योतयन् वन्दित्वाऽस्तवीत् । हे पूज्य ! सीमन्धरस्वामिना त्वं निगोदविचारपारगः कथितः, स प्रत्यक्षं दृष्टः, इत्युक्त्वा गच्छन् गुरुणोक्तः–गोचरीगताः शिष्या आगच्छन्ति तावत् तिष्ठ, तेऽपि त्वां सहर्षं पश्यन्ति । इन्द्रेणोक्तम्–मद्रूपमोहिता मा निदानं करिष्यन्ति । उपाश्रयद्वारं परावृत्य देवलोकं

गतः। शिष्या आगता द्वारमपश्यन्तः शब्दं कुर्वन्तो नन्यद्वारेण गुरुणा प्रवेशिताः। शिष्यैः विज्ञप्तम्–कथमेतत्? । गुरुभिः सर्वमिन्द्रस्वरूपं निवेदितम्।

ततः श्रीकालिकाचार्याश्चिरं निर्मलं चारित्रं प्रतिपाल्य प्रान्तेऽनशनं विधाय समाधिना देवलोकं प्राप्ताः। ततः श्रीकालिकाचार्या महाप्रभावकाः स्थविरा बभूवुः। तेषां सम्बन्ध उक्तः।

अथ प्रभाते साधुसामाचारी वक्ष्यते –सा वर्त्तमानयोगेनैवम्–एके दानं ददति, एके शीलं पालयन्ति, एके तपस्तपन्ति, एके भावनां भावयन्ति, स विधिचैत्यालयपूज्यमानश्रीशान्तिनाथशासनाधीश्वरश्रीवर्धमानतत्पट्टानुक्रमेण श्रीसुधर्मस्वामी तावद् यावद् युगप्रधानश्रीजिनचन्द्रसूरि-श्रीजिनसिंहसूरीणां प्रसादः, तेषामाज्ञया च श्रीसंघः प्रवर्त्तताम्॥

श्रीमद्विक्रमसंवति, रस-र्तु-शृङ्गारसंख्यके सहसि (१६६६)।
श्रीवीरमपुरनगरे, राउलनृपतेजसीराज्ये ॥३५॥
श्रीबृहत् खरतरगच्छे, युगप्रधानसूरयः।
जिनचन्द्रा जिनसिंहाश्च, विजयन्ते गणाधिपाः ॥३६॥
तच्छिष्यः सकलचन्द्रः, शिष्यः समयसुन्दरः।
कथां कालकसूरीणां, चक्रे बालावबोधिकाम् ॥३७॥

इति श्रीकालिकाचार्यकथा समाप्ता॥ ग्रन्थाग्रम्–४४१॥

## [२४]

### अज्ञातसूरिविरचिता

# कालिकाचार्यसंक्षिप्तकथा॥

जीयात् स कालकाचार्यः, प्रभावकशिरोमणिः।
पञ्चमीतश्चतुर्थ्यां यश्चक्रे पर्युषणामिमाम् ॥१॥
पुरा पुरे धरावासे, विस(श्व)द्वासव(शय)वद्वशी।
वैरिसिंहो नृपोऽस्य स्त्री, शचीव सुरसुन्दरी ॥२॥
कलानिधिः शशीवासीत्, तत्पुत्रः कालकाह्वयः।
सरस्वतीव (च) तत्पुत्री, मर्त्यक्षेत्र सरस्वती ॥३॥
निवृत्तो वाहकेलीतो, योधपञ्चशतीयुतः।
वने गुणाकरं सूरिं, सत्याख्यं स निरैक्षत ॥४॥
उपाविशद् गुरुर्जीवयौवनस्नेहसंपदः।
कुशाग्रजलवल्लोला, ज्ञात्वा स्वोचितमाचर ॥५॥
तद्देशनासुधापानशान्ताज्ञानगरल्यथः।
सरस्वती-भटान्वितः, कालकोऽकलयद् व्रतम् ॥६॥

श्रुताब्धिपारदृश्वत्वं, तस्यामृश्य गुरोरिव ।
चकाराचार्यकं सूरिः, सत्पात्रं को हि नार्हति ? ॥७॥
विहरन् स क्रमात् प्राप, गुरुरुज्जयिनीं पुरीम् ।
घनागमाद् बर्हिणवत्, संघः प्रीतस्तदागमा(म)त् ॥८॥
गुरुं नत्वा स वसतिं, संश्रयन्तीं सरस्वतीम् ।
दृष्ट्वा कामान्धलो गर्दभिल्लो भिल्ल इवाहरत् ॥९॥
तद्रूपमूढः सोऽध्यासीत्, कामो नूनं न जीवति ।
कुतोऽन्यथाऽसौ प्राव्राजीद्, रूपाद् रतिरिवापरा ॥१०॥
तपस्विनीममुञ्चन्तं, संघोक्त्याऽपि नृपं विदन् ।
तदुन्मूलनमाध्याय, शाकदेशाश्रितः प्रभुः ॥११॥
तस्मात् तत्सैन्यमानीय, सूरिः कनकतोपितम् ।
दूतेनाजूहवद् गर्दभिल्लं मल्लं जगत्यपि ॥१२॥
बाणाबाणि खड्गाखड्गि, कुन्ताकुन्ति गदागदि ।
यष्टायष्टि मुष्टामुष्टि, योधा युयुधिरे क्रुधा ॥१३॥
शस्त्रैः शितैश्चूर्णपेषं, पिबन्तां(तां) द्विषतां मिथः ।
रणाद्रेः प्रासरन् रक्तसरितः कुलमुद्वहाः ॥१४॥

( २ )

गुरुर्भृगुपुरं प्राप्तः, स्वभागिनेयनृपाग्रहात् ।
प्राव्राजयद् बलभानुकुमारं मारसन्निभम् ॥१५॥

( ३ )

ततः प्रतिष्ठानपुरे, शातवाहनवाक्यतः ।
पञ्चमीतश्चतुर्थ्यह्नि, प्रभुः पर्युषणां व्यधात् ॥१६॥
अन्वमन्यत संघोऽपि, गीतार्थैश्चीर्णमित्यदः ।

( ४ )

शिष्यापमाननात् सूरिं, सागरेन्दुं गुरुर्गतः ॥१७॥
अखर्वगर्वं तं सूरिं, विद्याराजादिपूजनात् ।
प्रभुः प्रबोधयामास, सिकतामस्यदर्शनात् ॥१८॥

( ५ )

प्रतिष्ठानपुरं प्राप्तो, निगोदानां स्थितिं श्रुतात् ।
उक्त्वा शक्राय गतवान्, स्वर्गं कालकसूरिराट् ॥१९॥

इति श्रीकालिकाचार्यकथानकं समाप्तम् ॥७॥

१–धारावासनगरे वैरसिंहो राजा । एतस्य सुरसुन्दरीभार्या । कालककुमारः सरस्वती पुत्री ।

२–एकदा उद्यानवने श्रीगुणाकरसूरिसमीपे कुमारेण व्रतं जगृहे सरस्वतीस्वस्रा सह ।

३–उज्जयिन्यां गर्दभिल्लराजा ।

४–शककूलदेशे साहाणुसाहिभृत्यशाखिनः ९६ सुराष्ट्रायां प्राप्ताः । तत्र सुवर्णसिद्धियोगाद् मालवकं प्राप्य गर्दभिल्लो जितः ।

५–भृगुकच्छे सूरिभागिनेयौ द्वौ बलमित्रभानुमित्रौ नृप-युवराजजातौ । भानुश्रीनाम्नी राजभगिनी, तत्पुत्रो बलभानुः स च सूरिणा दीक्षिता(तः) ॥ श्रीरस्तु

६–नृपमन्त्री–मतिसागरः स च मिथ्यात्वी । प्रतिष्ठानपुरे सातवाहनो राजा तत्सांनिध्यतः पर्युषणापर्वाभवत् चतुर्थ्याम् ।

७–कनकदेशे रत्नाकरसूरिशिष्यसागरचन्द्रसूरिः ।

८–प्रतिष्ठानपुरे श्रीकालकाचार्यसमीपे इन्द्रसमागमः ।

९–इहलोक-परलोके नित्यानित्यलक्षप्रमाणद्वयशुद्धं जिनमतं मन्यमानो द्वितीयप्रभावनां कृतवान् ।

१०–उभयकुलविशुद्धः पुमान् श्राद्धवर्गः सम्यग् भवति ।

११–"उप्पन्नए वा विगमे वा धुवे वा" इति सिद्धान्तप्ररूपणात् ज्ञानदर्शनचारित्ररत्नमेव सारं तत्प्राप्त्यर्थं तृतीयां प्रभावनां रचयामास सादरः श्रावकः ।

१२–धर्म्मार्थकाममोक्षसाधकाः दानशीलतपोभावनापरायणाः क्रोधमानमायालोभभञ्जनकामाः सन्तश्चतुर्थप्रभावनां कारयन्ति श्रावकाः ॥ श्रीः ॥

१३–क्षायिक-क्षयोपशमिक-औपशमिक-औदयिकलक्षण-सम्यक्त्वपञ्चकं पञ्चश(स)मिति-पञ्चमहाव्रतपालक-तपोधनानाराधयितुं नराः पञ्चमीं प्रभावनां कुर्वन्ति ॥ श्रीरस्तु ॥

## [२९]

### मलधारिहेमचन्द्राचार्यविरचितापुष्पमालान्तर्गतं

# कालिकाचार्यकथानकम् ॥

इह सत्यवादिनो द्विधा–लोकोत्तरो लौकिकश्च । तत्राऽऽद्यसमर्थनार्थं तावदुदाहरणमाह––

मरणे वि समावडिए, जंपंति न अन्नहा महासत्ता ।
जन्नफलं निवपुट्ठा, जह कालगसूरिणो भयवं ॥१॥

अक्षरार्थः प्रकट एव ।

के पुनरमी भगवन्तः कालकाचार्याः, कथं च ते यज्ञफलं नृपेण पृष्टा इति कथानकेनोच्यते––

कण्हतणु व्व सुसिरिया, वहुनरसंतोसया सुविलया य ।
नयरी नामेणं तुरुमिणि त्ति भरहम्मि सुपसिद्धा ॥१॥

जियसत्तू तत्थ निवो, जलहि व्व न दीणभावमणुपत्तो ।
भद्दाए माहणीए, सुओ य दत्तो तहिं वसइ ॥२॥
विप्पो वि पियइ मज्जं, रमइ य वेसासु कीलए जूयं ।
खुद्दो रुद्दो भीमो, केवलदोसालओ सो य ॥३॥
ओलग्गिउं पयट्टो, कहमवि सो अन्नया महीनाहं ।
उज्जुअयाए तेण वि, दिट्ठो अइगुरुपसाएण ॥४॥
अहमेहेण वसित्तो, एसो विसपायवो व्व वित्थरिओ ।
लुंटंतो पगईओ, जाओ य कमेण सामंतो ॥५॥
तो भेयं दाऊणं, संगहिया तेण सयलसामंता ।
रज्जं पि तओ गहियं, अवहत्थेऊण जियसत्तुं ॥६॥

अथवा—

उवयरमाणाण वि सज्जमाणाण विहडइ खलो खणद्धेण ।
दुद्धाइदाणओ पोसिओ वि डसइ च्चिय भुयंगो ॥७॥
अवयरइ निव्वियारे वि, सज्जणे दुज्जणो हयसहावो ।
अमयमओ वि मयंको, गसिज्जए जं विडप्पेण ॥८॥
पीणेइ सप्पणी जो य, हुयवहो दहइ तं पि हु अणज्जो ।
अहवा को दुज्जणविलसियाण जाणिज्ज सीमंतं ॥९॥
निस्सारिऊण मुक्को, अह जियसत्तू वि वयइ अन्नत्थ ।
एसो य कुणइ रज्जं, जण्णे य जयावए वहुए ॥१०॥
तस्स य माउलओ, विहरमाणओ कहवि तत्थ संपत्तो ।
कालगसूरी नामं, आयरिओ बहुगुणग्घविओ ॥११॥
नियधम्मेण तुट्ठो, राया गंतूण ताण पासम्मि ।
पुच्छइ भामग ! साहसु, जण्णाणं किं फलं होइ ? ॥१२॥
तो तेहिं चिंतियं ताव, जिणमयं अन्नहा न कहियव्वं ।
अवितहकहणे उण, कम्मबंधमेसो बहुं कुणइ ॥१३॥
तावक्खेवो जुत्तो, एत्थं ति विचिंतिऊण तो भणियं ।
धम्मस्स फलं नरवइ !, सग्गापवग्ग त्ति सुपसिद्धं ॥१४॥
पुच्छामि न धम्मफलं, जण्णफलं कहसु तेण इति भणिए ।
पुणरवि भणइ सूरी पंथो निरयाण वि अहम्मो ॥१५॥
को तुममेयं पुच्छइ, जण्णफलं कहसु आह तह वि गुरू ।
असुहाण वि कम्माणं, उदओ निरयाइ दुहजणओ ॥१६॥
एवं भणिओ वि पुणो वि पुच्छए सो निवो पयंपंतो ।
साहिक्खेवं वयणं, तत्तो सूरी वि चिंतेइ ॥१७॥

रक्खंति कम्मबंधं, परस्स सक्कं बुहा विना सक्कं ।
एसो य निवो भवियव्वयाइ आलिंगिओ नूणं ॥१८॥
ता साहेमि जहत्थं ति, चिंतिउं भणइ नरवर सुणेसु ।
पसुघायकारणेणं, जण्णाण फलं महानरया ॥१९॥

यतः प्रोक्तं व्यासेन—

"ज्ञानपालिपरिक्षिप्ते, ब्रह्मचर्यदयाम्भसि ।
स्नात्वाऽतिविमले तीर्थे, पापपङ्कापहारिणि ॥२०॥
ध्यानाग्नौ जीवकुण्डस्थे, दममारुतदीपिते ।
असत्कर्मसमित्क्षेपैरग्निहोत्रं कुरूत्तमम् ॥२१॥
कषायपशुभिर्दुष्टैर्धर्मकामार्थनाशनैः ।
शममन्त्रहुतैर्यज्ञं, विधेहि विहितं बुधैः ॥२२॥
छिन्धि तृष्णालतागुल्मं, भिन्धि संसारपञ्जरम् ।
सदानन्दसुखं नित्यं, ततो व्रज परं पदम् ॥२३॥
प्राणिघातात् तु यो धर्ममीहते मूढमानसः ।
स वाञ्छति सुधावृष्टिं, कृष्णाहिमुखकोटरात्" ॥२४॥

इत्यादि ॥

अह कुविओ सो राया, भणइ नरयम्मि मज्झ गंतव्वे ।
को पच्चओ त्ति साहसु, भो पव्वइयग विचिंतेउं ॥२५॥
तो भणियं सूरीहिं, तुममेत्थि वि तत्ततिल्लकुंभीए ।
नरवर सत्तमदियहे, सुणएहि समं खिविज्जहसि ॥२६॥
को पच्चओ इहं पि हु, तो भणियं सूरिणा तुह मुहम्मि ।
पढमं चिय तत्थ दिणे, असुईकत्तो चिए विसिहिई ॥२७॥
तो भणइ निवो कुविओ, मरिहसि तं दुट्ठ ! कस्स हत्थेण ।
आह मुणी न कस्सइ, सुइरं तु वयं चरिस्सामि ॥२८॥
रुंधाविऊण सूरिं, सव्वत्तो नियनरेहिं तो राया ।
अइकोवसुव्वहंतो, गिहं गओ तेण वि समग्गा ॥२९॥
सामंता नियदुट्ठत्तणेण, उव्वेइया अईवदढं ।
मंतेऊणं तं चिय, छन्नं आणंति जियसत्तुं ॥३०॥
एत्तो य दत्तराया, कोवत्तरिउ त्ति सत्तमदिणम्मि ।
अट्ठमयं मन्नंतो, नीहरइ गिहाउ तुरयगओ ॥३१॥
सव्वेहिं वि सामंतेहिं, परिगओ जाव थेवदूरम्मि ।
वच्चइ मुणिवहणत्थं, कुविओ ता घोडयखुरेण ॥३२॥
असुई उक्खित्ता निवमुहम्मि पडिया पहम्मि सहस त्ति ।
नूणं दिणाण भुल्लो, संभंतो चिंतिउं निवई ॥३३॥

जा वालइ नियतुरयं, भीया ते ताव सयलसामंता ।
कत्तो वि मंतभेओ, नूणं जाओ त्ति मन्नंता ॥३४॥
वंधेऊणं घल्लंति तं निवं तत्ततेल्लकुंभीए ।
गलए य तस्स सुणए, खिवंति तह वंधिउं वहवे ॥३५॥
हेट्ठा य हुयवहं जालयंति ते डज्झमाणया सुणया ।
खंडाखंडिं निवइं, कुणंति सययं चडपाडंता ॥३६॥
अह मरिउं सो दत्तो, निरयं पत्तो अईवदुक्खत्तो ।
सूरी पुण विहरेउं, सुइरं पच्छा गओ वि दिवं ॥३७॥

इत्यवितथजिनमतप्ररूपक—कालिकाचार्यकथानकं समाप्तम् ॥छ॥

# [२६]

## श्रीशुभशीलगणिविरचिता
## भरतेश्वर-वाहुवलीवृत्त्यन्तर्गता

# कालिकाचार्यकथा।

[ रचनासंवत् १५०९ ]



दत्तेन भूभुजा यागफलं पृष्टोऽन्यदा हठात् ।
कालिकाचार्य आचष्ट, नरकस्य गतिं स्फुटम् ॥१॥

तथाहि—तुरमिण्यां पुरि कालिको भूदेवो वभूव। तस्य भद्राह्वा सहोदरी जाता। तस्य स्वस्रीयो दत्त इति नामाऽभूत्। कालिकः क्रमात् गुरूपान्ते धर्मोपदेशमाकर्ण्य वैराग्यात् संयमश्रियं जग्राह । तं शास्तारं विना दत्तोऽत्यन्तनिर्गलोऽभूत्। क्रमात् सप्तव्यसनासक्तो वभूव। क्रमाद् दुर्दैवयोगाज्जितशत्रुभूपस्य दत्तः सेवकोऽभूत्। अज्ञेन भूपेन जितशत्रुणा स दत्तः प्रधानपदवीं प्रापितः । क्रमात् सर्वान् सेवकान् वशीकृत्य तं भूपं निर्वास्य दत्तः स्वयं राजाऽभूत्।

दुर्वृत्तप्लवगव्याल-व्याघ्रमार्जारवह्निवत् ।
नोपकारैः परिग्राह्यः, स भूपो विबुधैरपि ॥२॥

ततस्तस्य राज्ञो बुधाः प्रजाश्च विश्वासं न कुर्वते विश्वस्तघातकत्वात्। यतः—

ये कुलाचारतो भ्रष्टाः, परलोकादभीरवः ।
तेषां कुर्वीत विश्वासं, न कथञ्चन मानवाः ॥३॥

आचराज्यं दत्तं पापिनं प्रकृतिर्न विश्वसिति स्म । जितशत्रुरन्यत्र प्रच्छन्नं स्थितः ।

राजचक्रं समाक्रम्य, दद्दुरू(दुर्दुरू)ढोऽतिमूढधीः ।
अविनीतः प्रकृत्याभूत्, दत्तो द्वेषस्य भाजनम् ॥४॥

स दत्तो राजा यागं कारयन् भूरिजीवान् निरन्तरं हन्ति। यथा यथा यागे हन्यमानानां पशूनां रुधिरप्रवाहः प्रससार तथा तथा स दत्तो राजा जहर्ष। अन्यदा श्रीसूरिपदप्राप्तः कालिकाचार्यस्तत्रागात्। तमागतं तत्र सूरिं श्रुत्वा दत्तस्तत्राययौ। तेन राज्ञाऽन्यदा यज्ञफलं पृष्टो गुरुरुवाच—धर्मात् त्रिविष्टपप्राप्तिरधर्मान्नरकप्राप्तिर्ध्रुवम्। ततो भूयोऽपि तेन राज्ञा यज्ञफलं पृष्टो गुरुर्नरकमादिदेश। तव श्वभ्रगतिर्भविष्यति। यतः—

अस्थि वसति रुद्रश्च, मांसे वसति जनार्दनः ।
शुक्रे वसति ब्रह्मा च, तस्मान्मासं न भक्षयेत् ॥५॥
तिलकसर्षपमात्रं तु, मांसं यो भक्षयेन्नरः ।
स निवर्तते नरकं, यावच्चन्द्रदिवाकरौ ॥६॥

भो राजन्! सप्तदिनमध्ये यदि तवानने विष्टालेशः पतिष्यति तदा त्वया ज्ञातव्यं नरकगतिः स्वस्य। तदानीं रुष्टो राजाऽवग्—भो मातुल! तव का गतिर्भविष्यति?। गुरुराचष्ट—अहं व्रतं प्रपाल्य स्वर्गं यास्यामि। तदानीं दत्तेन स्वसेवकपार्श्वादसिना हन्यमानोऽपि श्रीकालिकाचार्यो जगौ—यागो नरकाय भवति। उक्तं च—

दत्तेण पुच्छिओ जो, जन्नफलं कालओ तुरमिणीए ।
समयाहियाहिएणं, सम्मं वुइयं भयतेणं ॥७॥

दत्तेन ध्यातं यद्यहं सप्तदिनेभ्यः पुरतो जीविष्यामि तदा कालिकाचार्यममुं हनिष्यामि। ततस्तस्य सूरेरन्तिके स्वसेवकान् मुक्त्वा स दुष्टमतिर्दत्तः सौधमध्ये सप्तदिनानि स्थातुं स्थितः। इतो जितशत्रुभूपभक्तैर्जितशत्रुभूपो राज्यदानार्थं प्रकटीचक्रे प्रच्छन्नम्। इतो रक्ष्यमाणेषु राजमार्गेषु अशुचिषु वस्तुषु अपसार्यमाणेषु सप्तमे दिने दत्तो राजा हृष्टतुरगारूढोऽष्टमदिनभ्रान्त्या ध्रियमाणातपत्रो राजमार्गे निरससार। इतो मालिकः पुष्पपूर्णकरण्डयुतो राजमार्गे समागात्। भेर्यादिनिनादैः श्रुतमात्रैरकस्मात् तस्यात्यन्तं मलोत्सर्गचिन्ताऽभून्मालिकस्य। लोकबाहुल्यादन्यत्र गन्तुमशक्नुवन् लब्धलक्षतया त्वरितं मलोत्सर्गं तत्रैव कृत्वा तस्योपरि पुष्पपुञ्जं मुक्त्वा मालिकोऽग्रतो गतः। तदा राज्ञो दत्तस्य तस्मिन् मार्गे गच्छतस्तुरङ्गमखुरोत्खातो विट्लेशो वदनेऽविशत्। स राजा दत्तस्तेन प्रत्ययेन पश्चाद् यावद् गृहाभिमुखं समायाति, तावन्मन्त्रिनियुक्तैः सेवकैर्दत्तो हतः। स दत्तो मृत्वा सप्तमं नरकं गतः। स जितशत्रुभूपः स्वराज्ये उपविष्टः। ततस्तं कालकाचार्यं भूपो निषेवते स्म, जिनधर्मं चाङ्गीचकार॥

( २ )

श्रीपुरे प्रजापालभूपस्य राज्ञी पुत्रं प्रासूत। तस्याभिधानं कालिककुमार इत्यभूत्। पुत्री तु भानुश्रीरासीत्। कालिककुमारः श्रीगुरुपार्श्वे धर्मं श्रुत्वा दीक्षां ललौ। स च बहुश्रुतोऽभूत्, गुरुभिः सूरिपदं दत्तम्। इतो राज्ञा भानुश्रीभृगुकच्छे जितारिभूपस्य दत्ता। तस्याः सुतौ बलमित्र-भानुमित्रौ। तयोर्भागिनेयो बलभानुरभूत्। एकदा तत्र गुरवः कालिकसूरय आगताः। तत्र धर्मोपदेशं श्रुत्वा बलभानुर्दीक्षां जग्राह। तदा गुरुसत्कैः क्षुल्लकैर्गङ्गाधरः पुरोहितो वादे जितः। एकदा गुरवो विहारं कृत्वा तत्रागताः, बलमित्र-भानुमित्रयोराग्रहाद् गुरवस्तत्र चातुर्मासीं स्थिताः। ततो गङ्गाधरपुरोहितस्तान् गुरून् कर्षितुमिच्छन् पूर्ववैराद् भूपाग्रे छन्नं जगौ—

देव! इमे जइपुज्जा, भमंति जहिं तत्थ गच्छिरम्मि जणे ।
गुरुपयअक्कमणकया, होइ अवन्ना दुरिअहेऊ ॥८॥

